श्रीगणेशाय नमः

# पिङ्गलच्छन्दःसूत्रम्

## हलायुधवृत्ति-सहितम् ।

तत्र प्रथमाध्यायः ।

---

(१) नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ १ ॥
श्रीमत्पिङ्गलनागोक्तच्छन्दःशास्त्रमहोदधेः (२) ।

[1] मयरसतजभनलगसम्मितं भ्रमति वाङ्मयं जगति यस्य ।
स जयति पिङ्गलनागः शिव-प्रसादाद् विशुद्धमतिः ॥ १ ॥
त्रिगुरुं विद्धि मकारं लघ्वादिसमन्वितं यकाराख्यम् ।
लघुमध्यमं तु रकारं सकारमन्ते गुरु निबद्धम् ॥ २ ॥
लघ्वन्त्यं हि तकारं जकारमुभयोर्लघुं विजानीयात् ।
आदिगुरुञ्च भकारं नकारमिह पैङ्गले त्रिलघुम् ॥ ३ ॥
दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम् ।
सानुस्वारञ्च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम् ॥ ४ ॥
आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥ ५ ॥
त्रिविरामं हृदयं यथाक्रममुवाच पिङ्गलः छन्दम् ।
छन्दोज्ञानपदार्थ-प्रत्यय-हेतोश्च शास्त्रादौ ॥ ६ ॥

[1] क, चिह्नितपुस्तके षडेते श्लोका नम इत्यस्मात् पूर्वं पठिताः ।

[2] महोदधाविति क, ख, चिह्नितपुस्तकपाठः ।

वृत्तानि मौक्तिकानीव कानिचिद्विचिनोम्यहम् ॥ २ ॥

वेदानां प्रथमाङ्गस्य कवीनां नयनस्य च ।

पिङ्गलाचार्य्यसूत्रस्य मया वृत्तिर्विधास्यते ॥ ३ ॥

क्षीराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।

छन्दोऽब्धेः पिङ्गलाचार्य्यैश्छन्दोऽमृतं तथोद्धृतम् (१) ॥ ४ ॥

इह हि त्रैवर्णिकानां साङ्गस्य वेदस्याध्ययनमाम्नायते (२) अर्थावबोधपर्य्यन्तश्चाध्ययनविधिः । वेदाङ्गञ्च छन्दः । ततस्तदध्ययनं विधिबोधितत्वादनुष्ठेयम् (३)। अथ अनुष्टुभा यजति बृहत्या गायति गायत्र्या स्तौतीत्येवमादिश्रवणादर्थान्वयायातमनुष्टुबादिज्ञानम् । किञ्च, छन्दसामपरिज्ञानात् प्रत्युत(४) प्रत्यवायः श्रूयते । यथा। "यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा, स स्थाणुं वर्च्छति गर्त्तं वा पद्यते वा प्रमीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति" इति छन्दोगब्राह्मणं (५)। तस्माच्छन्दःपरिज्ञानं कर्त्तव्यम्। तदर्थमिदं शास्त्रमारभ्यते। तत्र लघुनोपायेन शास्त्रावबोधसिद्ध्यर्थं सञ्ज्ञाः परिभाषते सूत्रकारः (६)।

१ ख, ग, चिह्नितपुस्तकयोः १, ३, ४, सङ्ख्यकाः श्लोका न सन्ति ।

२ अध्ययनं श्रूयते इति ख, चिह्नितपुस्तकपाठः ।

३ विधिबोधितत्वादनुष्ठेयमिति क, ग, चिह्नितपुस्तकपाठः ।

४ प्रत्युत प्रत्यवाय इति ख, चिह्नितपुस्तकपाठः ।

५ पापीयान् भवतीति छन्दोमानामार्षेयब्राह्मणं इति ग, चिह्नितपुस्तकपाठः ।

६ ख, ग, चिह्नितपुस्तकद्वये मध्ये एकः श्लोकोऽधिकः पठितः । अन्ये १, ३, ४, ५, ६, सङ्ख्यकश्लोकास्तु न पठिताः ।

## धी श्री स्त्री म्॥१॥

धी श्री स्त्रीत्यनेन गुरुत्रयं सञ्ज्ञित्वेनोपलक्षयति, मकारश्च सञ्ज्ञात्वेन। ततश्चायमर्थः, सर्व्वगुरोस्त्रिकस्य मसञ्ज्ञा(१) परिभाष्यते। ध्यादीनामुपादानप्रयोजनमुपरिष्टाद् वक्ष्यामः। मप्रदेशाः "विद्युन्माला मौ गौ" इत्येवमादयः॥

## वरा सा य्॥२॥

वरा सा इत्यनेनादिलघोस्त्रिकस्य यसञ्ज्ञा (२) परिभाष्यते। यप्रदेशाः "भुजङ्गप्रयातं यः" इत्येवमादयः॥

## का गुहा र्॥३॥

का गुहा इत्यनेन मध्यलघोस्त्रिकस्य रसञ्ज्ञा(३) परिभाष्यते। रप्रदेशाः "स्रग्विणी रः" इत्येवमादयः॥

## वसुधा स्॥४॥

वसुधा इत्यनेनान्तगुरोस्त्रिकस्य ससञ्ज्ञा(४) परिभाष्यते। सप्रदेशाः "तोटकं सः" इत्येवमादयः॥

---

१ मकारः सञ्ज्ञा इति च, चिह्नितपुस्तकपाठः।
२ य इति सञ्ज्ञा इति च, चिह्नितपुस्तकपाठः।
३ र इति सञ्ज्ञा इति च, चिह्नितपुस्तकपाठः।
४ स इति सञ्ज्ञा इति च, चिह्नितपुस्तकपाठः।

## सा ते क्व त् ॥ ५ ॥

सा ते क्व इत्यनेनान्त्यलघोस्त्रिकस्य तकारः सञ्ज्ञात्वेनोपादीयते ([1])। तप्रदेशाः "तनुमध्या त्यौ" इत्येवमादयः ॥

## कदा स ज् ॥ ६ ॥

कदा स इत्यनेन मध्यगुरोस्त्रिकस्य जसञ्ज्ञा([2])परिभाष्यते। जप्रदेशाः "कुमारललिता ज्सौ ग्" इत्येवमादयः ॥

## किं वद भ् ॥ ७ ॥

किं वद इत्यनेनादिगुरोस्त्रिकस्य भसञ्ज्ञा ज्ञाप्यते ([3])। भप्रदेशाः "चित्रपदा भौ गौ" इत्येवमादयः ॥

## न हसन् ॥ ८ ॥

न हस इत्यनेन सर्व्वलघोस्त्रिकस्य नसञ्ज्ञोपदिश्यते([4])। नप्रदेशाः "दण्डको नौ रः" इत्येवमादयः ॥

## गृ ल् ॥ ९ ॥

गृग्रहणं ह्रस्वैकाक्षरोपलक्षणार्थम्। तस्य लकारसञ्ज्ञा

---

१ त इति सञ्ज्ञां परिभाष्यते इति च, चिह्नितपुस्तकपाठः।

२ ज इति सञ्ज्ञा इति च, चिह्नितपुस्तकपाठः।

३ भ इति सञ्ज्ञा परिभाष्यते इति च, चिह्नितपुस्तकपाठः।

४ न सञ्ज्ञा परिभाष्यते इति च, चिह्नितपुस्तकपाठः।

भवति (१)। लशब्दश्च लघुवाचकः। तेन ह्रस्वमक्षरं लघुसञ्ज्ञं भवतीत्यर्थः सम्पद्यते। लप्रदेशाः "लः समुद्रा गणाः" इत्येवमादयः॥

## गन्ते॥ १०॥

ग्शब्दग्रहणमनुवर्त्तते। ग्शब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्त्तमानस्य गुरुसञ्ज्ञाऽतिदिश्यते (२)। ग् इति प्रथमाक्षरप्रतीकेन गुरुशब्दस्य ग्रहणं (३)। ननु ग्लिति समानीत्यादीनां (४) पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वं न दृश्यते। नैष दोषः। सर्व्वत्र पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वमुत्सर्गसिद्धं। तच्च लकारश्रुत्यापवादेन बाध्यते। यथा। ग्लिति समानी, गीत्यार्य्या ल इत्यादौ सामान्यस्य विशेषेण बाधः कस्य न सम्मतः (५)। तस्मादचोद्यमेतत् (६)। केचिदिदं सूत्रं व्यवस्थितविभाषया व्याचक्षते, प्रमाण्या-

---

१ ग् इत्यनेनोपलक्षितस्य ह्रस्वस्य ल इति सञ्ज्ञा परिभाष्यते इति पुस्तकान्तरपाठः।

२ गुरुसञ्ज्ञा परिभाष्यते इति ख, चिह्नितपुस्तकपाठः। गुरुसञ्ज्ञा निर्दिश्यते इति पुस्तकान्तरपाठः।

३ प्रथमाक्षरस्य ग्रहणेन गुरोर्ग्रहणमिति ग, चिह्नितपुस्तकपाठः।

४ ननु ग्लितिसमानीगात्यार्यादीनामिति ख, चिह्नितपुस्तकपाठः। ननु समानीगीत्यार्यादीनामिति ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

५ इत्यादौ उत्सर्गस्यापवादेन बाधः कस्य न सम्मत इति पुस्तकान्तरपाठः। इत्यादौ उत्सर्गस्यापवादोऽत्र बाधकत्वेन सम्मत इति ख, चिह्नितपुस्तकपाठः।

६ तस्मात् कुचोद्यमेतदिति ख, ग, चिह्नितपुस्तकपाठः।

दीनामन्ते गुरुत्वमेव, समान्यादीनामन्ते लघुत्वमेव, (१) शेषाणामिच्छया गुरुत्वं लघुत्वञ्चेति। तदनुपपन्नं। विकल्पस्याप्रस्तुतत्वात् कस्य व्यवस्थेति न विद्मः। ननु केनाप्युक्तं, "वा पादान्ते गुरु" इति (२) गुरुत्वं। सत्यमुक्तं। दुरुक्तं हि तत्। वान्ते गुरु इति(३) प्रोक्तं यैस्तु श्वेतपदादिभिः। उत्सर्गस्यापवादेन बाधस्तैर्नावधारितः॥ इत्युक्ते इच्छया गुरुत्वं लघुत्वञ्च नोपपद्यते। कस्येच्छया, किं शास्त्रकारस्य कवेर्वा। न तावदाद्यः पक्षः। सूत्रेष्वदर्शनात्। नापि द्वितीयः। कवेरपि इच्छायां(४) व्यवस्थाभावात्, को जानाति कस्य कीदृशीच्छेति। अन्ये त्वाहुः। ननु पादान्ते वर्त्तमानस्य ह्रस्वस्य पाणिनिना गुरुसञ्ज्ञा न कृता। तेनोक्तं "संयोगे गुरु, दीर्घञ्च" (१।४।११-१२) इति। नायं संयोगादिर्न च दीर्घः। तस्मात् गन्त इति सूत्रमयुक्तं। अत्रोच्यते। पाणिनिना स्वशास्त्रप्रयोजनार्थं गुरुसञ्ज्ञा कृता। "गुरोश्च हलः" (३।३।१०३) इत्यकारः प्रत्ययो यथा स्यात्। कुण्डा हुण्डा ईहाञ्चक्रे ऊहाञ्चक्रे इत्येवमादीनां "इजादेश्च गुरुमतोऽनृच्छः" इति (३।१।३६) सूत्रेणाम्प्रत्ययश्च (५)। पादान्ते वर्त्तमानस्य लघोर्गुरुत्वाति-

---

१ ख, ग, चिह्नितपुस्तकद्वयं लघुत्वमेवेत्यस्यापि तस्मादियं व्यवस्था प्रमाणमित्यधिकः पाठोऽस्ति।

२ पादान्ते गल इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

३ वान्ते गल इतीति ख, चिह्नितपुस्तकपाठः।

४ कवेरिच्छायामेवेति ख, चिह्नितपुस्तकपाठः।

५ ईहाञ्चक्रे ऊहाञ्चक्रे इत्येवमादिष्वाम्प्रत्ययश्चेति ख, चिह्नितपुस्तकपाठः।

देशे पाणिनेः प्रयोजनमेव नास्ति। किञ्चानुस्वारादिपूर्व्वस्य वर्णस्य वनं घटः सम्पदित्यादौ स्थितस्य गुरुसञ्ज्ञा पाणिनिना न कृता, किमेतावता अन्यैरपि न कर्त्तव्या। तस्मात् सूत्रमिदं "गन्ते" इति। गप्रदेशाः "गावन्त आपीडः" इत्येवमादयः॥

## ध्रादिपरः ॥ ११ ॥

ध्र इति व्यञ्जनसंयोगस्योपलक्षणम्। ध्र आदिर्येषां ते ध्रादयः। 'आदि'पदेन विसर्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानां ग्रहणं। ध्रादयः परे यस्मात् सः ध्रादिपरः। ततश्चायं सूत्रार्थः, व्यञ्जनसंयोगात् पूर्व्वस्य ह्रस्वस्य (1) अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयेभ्यश्च गुरुसञ्ज्ञातिदिश्यते॥

## ह्रे ॥ १२ ॥

ग इत्यनुवर्त्तते। ह्रे इति द्विमात्रोपलक्षणार्थं। ततश्चायं सूत्रार्थः, द्विमात्रस्य (2) दीर्घस्य गकारसञ्ज्ञा क्रियते॥

## लौ सः ॥ १३ ॥

१ पूर्वस्थितह्रस्वस्यैकमात्रिकस्येति ख, चिह्नितपुस्तकपाठः। पूर्वस्यैकमात्रिकस्येति ग, चिह्नितपुस्तकपाठः। पूर्वस्य ह्रस्वमात्रिकस्येति पुस्तकान्तरपाठः।

२ द्विमात्रिकस्येति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

स इति गकारस्य परामर्शः। स गकारो द्विमात्रो द्वौ लघू कृत्वा गणनीयः (१) ॥

## ग्लौ ॥ १४ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यत्र विशेषान्तरं न श्रूयते तत्र ग्लावित्युपतिष्ठते। गायत्र्या वसवः (३।३) इत्येवमादिषुवत् श्रुतेनेह व्यवहारो नास्ति ॥

## अष्टौ वसव इति ॥ १५ ॥

अत्र शास्त्रे वसव इत्युच्यमानेऽष्टसङ्ख्योपलक्षिता गुरुलघुस्वरूपा वर्णाः (२) गृह्यन्ते। लौकिकप्रसिद्ध्युपलक्षणार्थमिदं सूत्रं। तेन चतुर्णां समुद्राः, पञ्चानामिन्द्रियाणीत्येवमादयः सञ्ज्ञाविशेषा लौकिकेभ्य (३) प्रत्येतव्याः। 'इति'कारोऽध्यायसमाप्तिसूचकः ॥

इह ध्यादीनामुपादानप्रयोजनं वर्ण्यते। अध्ययनात् धीर्भवति। यस्य धीस्तस्य श्रीः, बुद्धिपूर्व्वकत्वात् विभूतेः। यस्य श्रीस्तस्य स्त्री, अर्थमूलकत्वात् गार्हस्थ्यस्य। वरा सा इत्य-

१ स गकारो मात्रागणनायां द्विमात्र, द्वौ लकारौ लघू कृत्वा गणयितव्य इति ख. चिह्नितपुस्तकपाठः। स गकारो मात्रागणनायां द्वौ लकारौ कृत्वा गणयितव्य इति पुस्तकान्तरपाठः।

२ वर्णा इर्येते ख, चिह्नितपुस्तकपाठः।

३ लोकेभ्य इति पुस्तकान्तरपाठः।

नेन सर्वेषां स्त्रीसाधनोपायानां बुद्धेरुपायस्य माहात्म्यं दर्शयति, तथाचोक्तम्,

"सर्वाङ्गुलपरीणाहजिह्वायायासभीरवः।
सर्व्वाङ्गेण(१)परिक्लिश्यमबुधाः कर्म्म कुर्व्वते"॥

तत्राह शिष्यः, का गुहा। 'गुहा'शब्दः स्थानपर्य्यायः। 'का गुहा,' यत्रासौ तिष्ठति। उपाध्यायो ब्रूते। 'वसुधा' पृथिव्यां(२), लभ्यते धीर्नात्रातिविषादः कर्त्तव्यः। पुनरप्याह शिष्यः, सा ते क्व। 'सा' धीः, त्वयोपदिष्टा, पृथिव्यां 'क्व', स्थितेन,(३) लभ्यते। गुरुराह, (४) गृहे। पुनरप्याह शिष्यः, कदा सः। 'सः' गृहस्थः पुरुषः, 'कदा' कस्मिन् काले, तां श्रियं प्राप्नोति॥ अत्रोत्तरम्, (५) धादिपरः। धारणार्थाव-बोधपरोऽसौ यदा स्यात् तदा श्रियं लभते। भूयोऽपि प्रश्नः, किं वद। 'किं,' कुर्वन् असौ तां श्रियं लभते तत् 'वद' (६)। तत्रोत्तरम्, न हसन्। हासादि-चापल्यं (७) अकुर्व्वाणस्तां श्रियं लभते इत्यर्थः॥

इति भट्टहलायुधकृतौ छन्दोवृत्तौ (८) प्रथमोऽध्यायः॥१॥

---

१ सर्वाङ्गकेति पुस्तकान्तरपाठः।

२ पृथिव्यामेवेति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

३ क्व चाश्रमे स्थितेनेति पुस्तकान्तरपाठः।

४ तत्राचार्य्यो ब्रवीति इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

५ तत्रोत्तरमिति ख, चिह्नितपुस्तकपाठः।

६ लभते इति ब्रूहि इति ख, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

७ हासादिचापलमिति ख, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

८ इति हलायुधभट्टकृतायां पिङ्गलच्छन्दोवृत्तौ इति ख, चिह्नितपुस्तकपाठः। इति हलायुधभट्टकृतायां पिङ्गलसूत्रवृत्तौ इति ग, चिह्नितपुस्तकपाठः।

## अथ द्वितीयोऽध्यायः।

| १ | छ० | गा० | उ० | अ० | बृ० | प० | त्रि० | ज० |
|---|---|---|---|---|---|---|---|---|
| २ | आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| ३ | दैवी० | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ४ | आसु० | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| ५ | प्राजा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| ६ | याजु० | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ७ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| ८ | आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ९ | ब्राह्मी० | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

१ एतच्चतुरस्रक्रीडाचक्रं ख. चिह्नितपुस्तके द्वितीयाध्यायादौ छन्द इति सूत्रस्य पूर्वं लिखितम्। किन्तु क. ग, चिह्नितपुस्तकद्वये तन्नाङ्कितमस्ति। वस्तुतस्तु सूत्रार्थोदाहरणस्थलत्वादस्य तत्रैव विन्यासः समुचित इति मन्यामहे।

२ प्राग्यजुषामार्ष्यः (सू०२।१६) इत्यस्योदाहरणम्।

३ दैव्येकम् (सू०२।३) एकैकं शेषे (सू०२।१२) इत्यनयोरुदाहरणम्।

४ आसुरी पञ्चदश (सू०२।४) अन्त्यादासुरी (सू०२।१३) इत्यनयोरुदाहरणम्।

५ प्राजापत्याऽष्टौ (सू०२।५) चतुरश्चतुरः प्राजापत्यायाः (सू०२।११) इत्यनयोरुदाहरणम्।

६ यजुषां षट् (सू०२।६) एकैकं शेषे (सू०२।१२) इत्यनयोरुदाहरणम्।

७ साम्नां द्विः (सू०२।७) द्वौ द्वौ साम्नां वर्द्धेत (सू०२।९) इत्यनयोरुदाहरणम्।

८ ऋचां त्रिः (सू०२।८) त्रींस्त्रीनृचाम् (सू०२।१०) इत्यनयोरुदाहरणम्।

९ तिस्रस्तिस्रः समानाम्न्य एकैका ब्राह्म्यः (सू०२।१५) इत्यस्योदाहरणम्।

(११) छन्दः ॥ १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। इत ऊर्द्ध्वं यद्वक्ष्यामश्छन्दस्तत्रोपतिष्ठते। छन्दःशब्देनाक्षरसङ्ख्यावत् छन्दोऽत्राभिधीयते ॥

( अथ गायत्र्यधिकारः। )

(१२) गायत्री ॥ २ ॥

अधिकारोऽयमाद्वादशसूत्रपरिसमाप्तेः। "तान्युष्णिग्" इत्यादिसूत्रात् (१) प्राक् यदुच्यते छन्दः, तद् गायत्रीसञ्ज्ञं वेदितव्यम् ॥

(१८) दैव्येकम् ॥ ३ ॥

एकाक्षरं छन्दो दैवीगायत्रीति सञ्ज्ञायते। तत्रायं प्रदर्शनोपायः। चतुरङ्गक्रीड़ायामिव चतुःषष्टिकोष्ठान् (२) लिखित्वा, प्रथमपङ्क्तौ आर्षीनाम लिखित्वा द्वितीयादिकोष्ठेष्वक्षराणामुपरि गायत्र्यादिसप्तच्छन्दसां नामानि विन्यसेत्। ततो द्वितीयायां (३) पङ्क्तौ प्रथमे कोष्ठे दैवीशब्दं विन्यसेत्। सञ्ज्ञाज्ञापनार्थं द्वितीये एकसङ्ख्याकमङ्कम् (४) ॥

१ इति सूत्रादिति ग, चिह्नितपुस्तकपाठः।

२ कोष्ठागाराणि इति ख, ग, चिह्नितपुस्तकपाठः।

३ द्वितीयस्यामिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ एकसङ्ख्याङ्कमेकं लिखेदिति ख, चिह्नितपुस्तकपाठः।

## (१९) आसुरी पञ्चदश ॥ ४ ॥

आसुरी गायत्री पञ्चदशाक्षरा। तानि चाक्षराणि "ग्लौ" (१।१४) इत्यधिकारात् गुरूणि लघूनि च यथासम्भव द्रष्टव्यानि। तत्र तृतीयस्यां पङ्क्तौ प्रथमे कोष्ठे आसुरीशब्दं व्यवस्थाप्य द्वितीये पञ्चदशसङ्ख्याङ्कं विन्यसेत् [1] ॥

## (२०) प्राजापत्याऽष्टौ ॥ ५ ॥

[2] प्राजापत्या गायत्री अष्टाक्षरा भवति। यत्र क्वचिद् वेदेऽष्टाक्षरं छन्दः सा [3] प्राजापत्या गायत्रीति ज्ञेयम्। तत्र चतुर्थ्यां पङ्क्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं लिखित्वा द्वितीयेऽष्टसङ्ख्याङ्कं लिखेत् ॥

## (२१) यजुषां षट् ॥ ६ ॥

यजुषां गायत्री षडक्षरा भवति। यत्र क्वचिद् वेदे षडक्षरं छन्दः तत् याजुषी गायत्री[4] सञ्ज्ञायते। तत्र पञ्चम्यां पङ्क्तौ प्रथमे कोष्ठे याजुषीशब्दं [5] व्यवस्थाप्य द्वितीये षट्सङ्ख्याङ्कं लिखेत् ॥

---

१ लिखित्वा द्वितीये कोष्ठे पञ्चदशसङ्ख्याङ्कं लिखेदिति ख, ग, चिह्नितपुस्तकपाठः।

२ यदष्टाक्षरं छन्दः सा प्राजापत्या गायत्रीति विज्ञायते इति ख, चिह्नितपुस्तके आद्यावधिकः पाठः।

३ छन्दस्तत् इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ गायत्रीति इति ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

५ यजुःशब्दमिति ख, ग, चिह्नितपुस्तकपाठः।

## (२२) साम्नां द्विः ॥ ७ ॥

षडित्यनुवर्त्तते । द्विरितिक्रियाभ्यावृत्तिदर्शनात् करोति-रध्याह्रियते(१)। तेन द्विःकृता द्विगुणिता षट्सङ्ख्या साम्नां गायत्री भवति। यत्र क्वचिद् वेदे द्वादशाक्षरं छन्द, तत् साम्नां गायत्रीति सञ्ज्ञायते। तत्र षष्ठ्यां (२) पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादशसङ्ख्याङ्कं लिखेत् ॥

## (२३) ऋचां त्रिः ॥ ८ ॥

षडित्यनुवर्त्तते। अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणिता षट्सङ्ख्या ऋचां गायत्री भवति। यत्र क्वचिद् वेदेऽ-ष्टादशाक्षरं छन्दः सा ऋचां गायत्री सञ्ज्ञायते(३)। तत्र (४) सप्तम्यां पङ्क्तौ प्रथमे कोष्ठे ऋक्शब्दं व्यवस्थाप्य द्वितीयेऽष्टादश-सङ्ख्याङ्कं लिखेत् ॥

## (२४) द्वौ द्वौ साम्नां वर्द्धेत ॥ ९ ॥

गायत्रीत्यनुवर्त्तते। साम्नां पङ्क्तौ गायत्री द्वौ द्वौ सङ्ख्याङ्कौ गृहीत्वा पूर्वात् पूर्वात् वर्द्धेत, यावदष्टमं कोष्ठं प्राप्नोति। तत्र साम्नां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण वर्द्धितान्यक्षराणि अङ्केन विन्यसेत् ॥

---

१ द्विरिति क्रियाभ्यावृत्तिः। द्वादशाक्षरं छन्दः साम्नां क्रियते इति म, चिह्नित-पुस्तकपाठः।

२ षष्ठ षष्ठ्यामिति ख, म, चिह्नितपुस्तकपाठः।

३ गायत्रीति सञ्ज्ञायते इति ख, चिह्नितपुस्तकपाठः। गायत्री ज्ञेयेति म, चिह्नित-पुस्तकपाठः।

४ सप्तेति ख, म, चिह्नितपुस्तकपाठः।

(२५) त्रींस्त्रीनृचाम् ॥१०॥

गायत्रीत्यनुवर्त्तते। ऋचां गायत्री त्रींस्त्रीन् सङ्ख्याङ्कान् (१) गृहीत्वा पूर्ववत् वर्द्धेत। अत्रापि ऋचां पङ्क्तौ तृतीयादिषु कोष्ठेषु त्रिसङ्ख्याकं क्रमेण हृद्धमङ्कं स्थापयेत् (२) ॥

(२६) चतुरश्चतुरः प्राजापत्यायाः ॥११॥

प्रजापत्यायाः पङ्क्तौ गायत्री चतुरश्चतुरःसङ्ख्याङ्कान् गृहीत्वा वर्द्धेत। अत्रापि तृतीयादिषु कोष्ठेषु विन्यासः पूर्व्ववदेव ॥

(२७) एकैकं शेषे ॥१२॥

अनुक्तः शेषः। यत्र गायत्र्यां सङ्ख्यावृद्धिर्नोक्ता सा एकैकं सङ्ख्याङ्कं गृहीत्वा वर्द्धेत। दैवी, याजुषी, च शेषशब्देनोच्यते, आसुर्य्यां विशेषाभिधानात् (३)। तेन दैवी तृतीयादिषु कोष्ठ-ष्वेकैकमङ्कं (४) गृहीत्वा वर्द्धेत। तथैव याजुषी ॥

(२८) जह्यादासुरी ॥१३॥

एकैकमित्यनुवर्त्तते। आसुरी गायत्री एकैकमक्षरं

१ त्रींस्त्रीन् त्रिसङ्ख्याङ्कानिति ख, चिह्नितपुस्तकपाठः।

२ अत्रापि तृतीयादिकोष्ठेषु त्रिसङ्ख्याकं क्रमेण हृद्ध स्थापयेदिति ख, चिह्नित-पुस्तकपाठः।

३ आसुर्य्यां निःशेषाभिधानादिति ख, चिह्नितपुस्तकपाठः। ग, चिह्नितपुस्तक-पाठश्च।

४ कोष्ठेषु क्रमेणैकैकमङ्कमिति ग, चिह्नितपुस्तकपाठः। कोष्ठेषु क्रमेणैकैकम-क्षरमिति ख, चिह्नितपुस्तकपाठः।

त्यजेत् । उत्तरेषु कोष्ठेषु वृद्धो प्राप्तायां ह्रासो विधीयते । तेऽङ्काः क्रमेण ख्याप्याः ॥

(२९) तान्युष्णिगनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगत्यः ॥१४॥

'तानि' इति छन्दांसि, गायत्र्याः परस्तात् (१) उष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगत्याख्यानि क्रमेण भवन्ति ॥

(३०) तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्म्यः ॥१५॥

यजुषां पङ्क्तिमारभ्य 'तिस्रः' याजुषी, साम्नी, आर्ची, चेति गायत्र्यः, मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री भवति। सनाम्न्य इत्येकमत्र्ज्ञा इत्यर्थः । तिस्रस्तिस्र इति वीप्सया परेषामुष्णिगादीनामिह ग्रहणम् । तथा एकैकेति वीप्सया तास्व (२) ब्राह्मी भवन्तीति विधीयते । ब्राह्म्य इति गायत्र्यादीनां जगतीपर्यन्तानां विशेषणम् । एवं याजुषी, साम्नी, आर्ची, च उष्णिग् मिलित्वा(३)एका द्विचत्वारिंशदक्षरा ब्राह्मी उष्णिक् भवतीति। एवं तिस्रोऽनुष्टुभः सङ्गताः सत्योऽष्टाचत्वारिंशदक्षरा एका ब्राह्म्यनुष्टुप् भवति । ता एव तिस्रो बृहत्यः, सङ्गताः सत्यश्चतुःपञ्चाशदक्षरा एका ब्राह्मी बृहती भवति । ता एव तिस्रः पङ्क्तयः सङ्गताः षष्ट्यक्षरा एका ब्राह्मीपङ्क्तिर्भवति । ता एव तिस्रस्त्रिष्टुभः सङ्गताः षट्षष्ट्यक्षरा

१ परस्तादिति ख, चिह्नितपुस्तकपाठः । पुस्तकान्तरपाठश्च ।

२ ता एवेति ख, ग, चिह्नितपुस्तकपाठः । पुस्तकान्तरपाठश्च ।

३ मिलिता एकोक्ता इति ख, चिह्नितपुस्तकपाठः ।

एका ब्राह्मी त्रिष्टुप् भवति। ता एव तिस्रो जगत्यः सङ्गता द्वासप्तत्यक्षरा एका ब्राह्मी जगती भवति। अत्राष्टम्यां पङ्क्तौ प्रथमे कोष्ठे ब्राह्मीशब्दं व्यवस्थाप्य द्वितीयादौ क्रमेण गायत्री-प्रमुखान् (१) षट्त्रिंशदाद्यङ्कान् विन्यसेत्॥

(२१) प्राग् यजुषामार्ष्य इति॥ १६॥

तिस्रस्तिस्र इत्यनुवर्त्तते। यजुषां पङ्क्तेः प्राक् प्राजापत्या, आसुरी, दैवी, इति यास्तिस्रो गायत्र्यस्ताः सङ्गताः सत्यश्चतुर्विंशत्यक्षरा एका आर्षी गायत्री भवति। ता एव तिस्र उष्णिहः सङ्गता अष्टाविंशत्यक्षरा एका आर्षी उष्णिक् भवति। ता एव तिस्रोऽनुष्टुभः सङ्गता द्वात्रिंशदक्षरा एका आर्षी अनुष्टुप् भवति। ता एव तिस्रो बृहत्यः सङ्गताः षट्त्रिंशदक्षरा एका आर्षी बृहती भवति। ता एव तिस्रः पङ्क्तयः सङ्गताश्चत्वारिंशदक्षरा एका आर्षी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः सङ्गताश्चतुश्चत्वारिंशदक्षरा एका आर्षी त्रिष्टप् भवति। ता एव तिस्रो जगत्यः सङ्गता अष्टाचत्वारिंशद-क्षरा एका आर्षी जगती भवति। तत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठे आर्षीशब्दं व्यवस्थाप्य द्वितीयादिषु चतुर्विंशत्याद्यङ्कान् विन्यसेत्। प्रथमपङ्क्तेर्द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्या-दीनि नामानि लिखेत्(२)। अयं स्पष्टतरःप्रदर्शनोपाय इति॥

इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः॥ २॥

———

१ गायत्र्याद्यानिति पुस्तकान्तरपाठः।

२ नामानि विन्यसेदिति च, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

(अथ तृतीयोऽध्यायः ।)

## (३२) पादः ॥१॥

अधिकारोऽयमाध्यायसमाप्तेः । यदित ऊर्द्ध्वमनुक्रमिष्याम-स्तत् पाद इत्यधिकृतं वेदितव्यम् । वक्ष्यति च गायत्र्या वसवः (३।३) इति ॥

## (३३) इयादिपूरणः ॥२॥

पाद इत्यनुवर्त्तते । इयादिः पूरणो यस्य स इयादिपूरणः । आदिशब्देन उवादयो गृह्यन्ते । अत्रायमर्थः, यत्र गायत्र्यादौ छन्दसि पादस्याक्षरसङ्ख्या न पूर्य्यते, तत्र इयादिभिः पूरयितव्या । यथा, तत् सवितुर्वरेणियं, दिवं गच्छ सुवःपत इत्यादि(१) ॥

## (३४) गायत्र्या वसवः ॥३॥

पाद इत्यनुवर्त्तते । परिभाषेयं । गायत्र्याः पादः 'वसव.' अष्टाक्षराणि, भवन्ति । यत्र यत्र गायत्र्याः पादोऽभिधास्यते, तत्र तत्राष्टाक्षरो ग्राह्यः(२) ॥

## (३५) जगत्या आदित्याः ॥४॥

पाद इत्यनुवर्त्तते । परिभाषेयं । जगत्याः पादो द्वादशाक्षरो भवति । यत्र क्वचित् जागतः पादस्तत्र द्वादशाक्षरो गृह्यते ॥

---

१ इत्येवमाद्य इति ख, चिह्नितपुस्तकपाठः । इत्याद्य इति ग, चिह्नितपुस्तकपाठः ।

२ दर्शितव्य इति ख, ग, चिह्नितपुस्तकपाठः ।

## (३६) विराजो दिशः ॥५॥

पाद इत्यनुवर्त्तते। यत्र क्वचिद् वैराजः पाद इत्युच्यते, तत्र दशाक्षरः प्रत्येतव्यः॥

## (३७) त्रिष्टुभो रुद्राः ॥६॥

त्रैष्टुभः पाद इत्युक्ते सर्व्वत्रैकादशाक्षरो गृह्यते। अस्मिन्नेवाध्याये परिभाषा एताश्चतस्रः॥

## (३८) एकद्वित्रिचतुष्पादुक्तपादं ॥७॥

एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तत् 'उक्तपादं,' (१)। यस्य च्छन्दसो यादृशः पादः परिभाषितस्तच्छन्दस्तेनैव पादेन क्वचिदेकपात्, क्वचिद् द्विपात्, क्वचित् त्रिपात्, क्वचिच्चतुष्पाद्, भवति। गायत्री च त्रिपादेव (२)। चतुर्भिरष्टाक्षरैः पादैरनुष्टुबेव भवति(३)॥

## (३९) आद्यं चतुष्पादृतुभिः ॥८॥

'ऋतु'शब्देन लक्षणया षड़क्षरः पादोऽभिधीयते। तैः पादैश्चतुष्पादाद्यं गायत्रं(४) छन्दो भवति। एवं चतुर्व्विंशत्यक्षराणि जायन्ते(५)। तत्रोदाहरणम्।

१ उक्तपाद् छन्द इति ख. ग. चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ गायत्री त्रिपदैवेति ग. चिह्नितपुस्तकपाठः। गायत्री च त्रिपदैवेति पुस्तकान्तरपाठः।

३ पादैरनुष्टुबेव स्यादिति ख, ग. चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ चतुष्पाद् गायत्रमिति ग. चिह्नितपुस्तकपाठः।

५ सम्पद्यन्ते इति ख. ग. चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

* इन्द्रः शचीपतिर्बलेन वीलितः।
दुश्च्यवनो वृषा समत्सु सासहिः (१) ॥

(५०) क्वचित्त्रिपादृषिभिः ॥९॥

क्वचिद् वेदे सप्ताक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति। एवमेकविंशत्यक्षराणि जायन्ते। तत्रोदाहरणम्।

* युवाकु हि शचीनां युवाकु सुमतीनां। भूयाम वाजदाव्नां ॥ ऋ०। १म०। ४अ०। १७सू० ॥ ४ ॥ (२)

(५१) सा पादनिचृत् ॥१०॥

सैव गायत्री पादनिचृदिति सञ्ज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदयसम्बन्धज्ञापनार्थमियं सञ्ज्ञा। वेदस्यानादित्वात्(३) सञ्ज्ञात्वेऽपि च न दुष्यति ॥

१ ख, ग, चिह्नितपुस्तकद्वये नैतदुदाहरणमस्ति। पुनः *एतादृशचिह्नाङ्कितानि वेदोदाहरणान्यपराणि वक्ष्यमाणानि एतत्पुस्तकद्वये न सन्तीति वेदितव्यम्।

२ ऋग्वेद प्रथममण्डल-चतुर्थानुवाक-सप्तदशसूक्तस्य चतुर्थी ऋगियम्। इयञ्चास्याः सायणाचार्यकृता व्याख्या। 'हि' यस्मात् कारणात्, 'शचीनां' अस्मदीयकर्मणां, सम्बन्धि सोमरूपं हविः, 'युवाकु' उदकविशेषेण पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितं, तथा 'सुमतीनां' शोभनबुद्धियुक्तानामृत्विजां, स्तोत्ररूपं वचनमपि 'युवाकु' नानाविधस्तुत्युपमिश्रितं। तस्मात् हे इन्द्रावरुणौ युवयोः प्रसादात् वयं 'वाजदाव्नां' अन्नप्रदातॄणां पुरुषाणां मध्ये, मुख्याः 'भूयाम' भवेम ॥ ४ ॥

३ वेदस्यादिमत्त्वादिति ग, चिह्नितपुस्तकपाठः।

(४२) षट्कसप्तकयोर्मध्येऽष्टावतिपादनिवृत् ॥११॥

प्रथमः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः, एवं त्रिभिः पादैर्या गायत्री सा अतिपादनिवृत्। त्रिपादित्यनुवर्त्तनीयम् ॥ (१)

(४३) द्वौ नवकौ षट्कश्च सा नागी ॥१२॥

आद्यौ(२) द्वौ नवाक्षरौ पादौ, तृतीयः षडक्षरः, एवं त्रिपात् या गायत्री, सा नागीत्युच्यते (३) ॥

(४४)विपरीता वाराही ॥१३॥

इयमेव नागी गायत्री, विपरीता सती, वाराही नाम (४) भवति। प्रथमः षडक्षरः, (५) द्वितीयतृतीयौ नवाक्षरौ॥

(४५) षट्कसप्तकाष्टकैर्वर्द्धमाना(६) ॥१४॥

षडक्षरः प्रथमः पादः, सप्ताक्षरो द्वितीयः, अष्टाक्षरस्तृतीयः,

---

१ षट्कसप्तकयोर्मध्यं त्रिपादनिवृत इति क्वचित पाठः। तत्र प्रथमः सप्ताक्षरः। द्वितीयः षडक्षरस्तृतीयः पुनः सप्ताक्षरः सा अतिपादनिवृदिति। एतस्य पाठस्य अनुक्रमणिकापाठेऽपि साम्यं दृश्यते इति ख. चिह्नितपुस्तकेऽधिकः पाठः।

२ ख, ग, चिह्नितपुस्तकद्वये आद्यौ इति पदं नास्ति।

३ एवं त्रिभिः पादैर्नागी गायत्री भवति इति ग चिह्नितपुस्तकपाठः। एवं त्रिभिः पादैर्नागी नाम गायत्री भवति इति क, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ वाराही नाम गायत्रीति पुस्तकान्तरपाठः।

५ षडक्षरः पाद इति ख, ग, चिह्नितपुस्तकपाठः।

६ षट्सप्ताष्टकैर्वर्द्धमाना इति ख चिह्नितपुस्तकपाठः पुस्तकान्तरपाठश्च।

एवं त्रिभिः पादैर्वर्द्धमाना [१] गायत्री भवति॥ तत्रोदाहरणम्।

* त्वमग्ने यज्ञानां होता विश्वेषां हितः।

देवेभिर्मानुषे जने॥ ऋ०।६म०। २अ०।१६सू० ॥१॥[२]

(१५) विपरीता प्रतिष्ठा॥१५॥

सैव वर्द्धमाना यदा विपरीता स्यात्तदा प्रतिष्ठा गायत्री भवति[३]। अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयः षडक्षरः[४]॥ तत्रोदाहरणम्।

* आपः पृणीत भेषजं वरूथं तन्वे३ मम।

ज्योक् च सूर्यं दृशे॥ ऋ०।१म०।५अ०।२३सू०॥२१॥[५]

---

१ वर्द्धमाना नामेति पुस्तकान्तरपाठः।

२ ऋग्वेद-षष्ठमण्डल-द्वितीयानुवाक-षोडशसूक्तस्य प्रथमा ऋगियम्। इयमस्याः सायणाचार्यकृता व्याख्या। हे 'अग्ने,' 'त्वं,' 'विश्वेषां' सर्वेषां सप्तमस्थानरूपेण विभिन्नानां, 'यज्ञानां,' 'होता' होमनिष्पादकः, असि, यद्वा, यज्ञसम्बन्धिदेवानां, भवसि। यस्मात् त्वं 'मानुषे' मनोः सम्बन्धिनि मनुष्ये, 'जने' यजमाने, 'देवेभिः' देवैः, 'हितः' होतृत्वेन निहितः, असि॥१॥

३ प्रतिष्ठा नाम गायत्री स्यादिति पुस्तकान्तरपाठः।

४ अष्टाक्षरः प्रथमः पादो द्वितीयः सप्ताक्षरः षडक्षरस्तृतीयस्तदा सैव वर्द्धमाना विपरीता सती प्रतिष्ठा नाम गायत्री भवति इति ख, चिह्नितपुस्तकपाठः।

५ ऋग्वेद प्रथममण्डल-पञ्चमानुवाक-त्रयोविंशसूक्तस्य एकविंशी ऋगियम्। इयमस्याः सायणाचार्यकृता व्याख्या। हे 'आपः,' 'मम,' 'तन्वे' शरीरार्थं, 'वरूथं' रोगनिवारकं, 'भेषजं' औषधं, 'पृणीत' पूरयत। किञ्च 'ज्योक्' चिरं, 'सूर्यं,' 'दृशे' द्रष्टुं, नीरोगा वयं शक्नुवाम इति शेषः॥२१॥

## [४७] तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥१६॥

तृतीयशब्देनैतदध्यायसूत्रपाठक्रमापेक्षया विराजमाह। तथा-चोक्तम्, "विराजो दिशः (३।५)" इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पादः स्यात् ततस्ताभ्यां द्विपाद् विराड्नाम गायत्री भवति॥ तत्रोदाहरणम्।

*पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तं। सजोषाः धीराः पदैरनु ग्मन्नुप त्वा सीदन् विश्वे यजत्राः॥ऋ०।१म०।१२अ०।६५सू०॥१॥ [१]

## [४८] त्रिपात् त्रैष्टुभैः ॥१७॥

एकादशाक्षरैः पादैस्त्रिपाद् [२] विराड् नाम गायत्री भवति। तृतीयमित्यनुवर्त्तनीयं [३]। तत्रोदाहरणम्।

---

१ ऋग्वेद-प्रथममण्डल-द्वादशानुवाक-पञ्चषष्टितमसूक्तस्य प्रथमा ऋगियम्। इयञ्चास्याः सायणाचार्यकृता व्याख्या। 'धीराः' मेधाविनो देवाः, 'सजोषाः' समानप्रीतयः सन्तः, हे अग्ने त्वा 'पदैः' मार्गे पादकृतैर्लाञ्छनैः, 'अनुग्मन्' अन्वगमन्। कीदृशं, 'पश्वा' अपहृतेन पशुना सह, 'तायुं न' स्तेनमिव, 'गुहा चतन्तं' अप्सु गुहायां गच्छन्तं, 'नमो युजानं' हविर्लक्षणमन्नमात्मना संयुजानं, 'नमो वहन्तं' देवेभ्यो हविर्वहन्तं। 'यजत्राः' यजनीयाः, 'विश्वे' सर्वे देवाः, हे अग्ने 'त्वा' त्वा, 'उपसीदन्' समीपमप्राप्नुवन्, ददृशुः, इत्यर्थः॥१॥

२ त्रिपाच्छन्द इति ख, चिह्नितपुस्तकपाठः।

३ तृतीयमित्यनुवर्त्तते इति म, चिह्नितपुस्तकपाठः।

* दुह्वीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै।

इषे च नो मिमीतं धेनुमत्यै॥ ऋ०। १म०। १७अ०। १२०सू॥ ९॥ (१)

इति गायत्राधिकारः॥

(अथ उष्णिगधिकारः॥)

(४९) उष्णिग् गायत्रौ जागतश्च॥१८॥

यत्र गायत्रावष्टाक्षरौ (२)पादौ, जागतश्च द्वादशाक्षरः, एवं त्रिभिः पादैरुष्णिङ् नाम छन्दो भवति। अत्र च क्रमो न विवक्षितः। पादसङ्ख्यामात्रं विधीयते॥

(५०)ककुम्मध्ये चेदन्त्यः॥१९॥

गायत्र्योः(३) पादयोर्मध्ये जागतश्चेत् पादो भवति, तदा सा उष्णिक् ककुप्सञ्ज्ञां लभते॥ तत्रोदाहरणम्।

१ ऋग्वेद-प्रथममण्डल-सप्तदशानुवाक-विंशत्यधिकशततमसूक्तस्य नवमी ऋगियम्। इयञ्चास्या सायणाचार्यकृता व्याख्या। हे अश्विनौ 'युवाकु' युवां, कामयमानाः स्तोतारः, 'मित्रधितये' बन्धुजनरक्षणार्थं, 'दुह्वीयन्' दुष्टतस्कराग्रात् धनानि प्राप्नुवन्ति। अतः 'नः' अस्मान् अपि, 'वाजवत्यै' वाजयुक्ताय, 'च', 'राये' धनाय, 'मिमीतं' कुरुतम्। अस्मभ्यं स्तोतृभ्यो बलयुक्तं धनं गोयुक्तमन्नञ्च प्रयच्छतमिति निष्कृष्टार्थः॥ ९॥

२ यत्राष्टाक्षराविति ख, ग, चिह्नितपुस्तकपाठः।

३ गायत्र्या इति ख, चिह्नितपुस्तकपाठः।

* सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः ।
यं त्रायध्वे स्याम ते ॥ऋ०।५म०।४अ०।५४सू०॥१५॥ (१)

(४१) पुरउष्णिक् पुरतः ॥२०॥

पुरतश्चेज्जागतः पादः स्यात्,(२) गायत्रौ च परतः, तदा सा पुरउष्णिक्सञ्ज्ञां लभते(३) ॥ तत्रोदाहरणम् ।

* अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।
देवा भवत वाजिनः ॥ऋ०।१म०।५अ०।२३सू०॥१९॥ (४)

१ ऋग्वेद-पञ्चममण्डल चतुर्थानुवाक-चतुष्पञ्चाशत्तमसूक्तस्य पञ्चदशी ऋगियम्। इयञ्चास्या सायणाचार्यकृता व्याख्या। हे 'समहः' पूजित मरुतां गण, 'सुदेवः' कल्याणमरुत्सम्बन्धकदेवोपेत, 'असति' भवति। हे 'नरः' नेतारो हे मरुत 'स,' 'मर्त्यः,' 'सुवीरः' शोभनपुत्राद्युपेतश्च, 'असति' भवति। 'यं' मर्त्यं, 'त्रायध्वे' पालयध्वे, य एवं भवति 'ते' वयं, 'स्याम' युष्मदीयाः ॥१५॥

२ स एव जागतः पादः प्रथमश्चेद्भवतीति ख, चिह्नितपुस्तकपाठः ।

३ पुरउष्णिक् नाम भवतीति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ ऋग्वेद-प्रथममण्डल-पञ्चमानुवाक-त्रयोविंशसूक्तस्य एकोनविंशी ऋगियम्। इयञ्चास्याः सायणाचार्यकृता व्याख्या। 'अप्सु' जलेषु, 'अन्तः' मध्ये, 'अमृतं' पीयूषं, वर्त्तते। तथैव अप्सु 'भेषजं' औषधं वर्त्तते। 'उत' अपिच, तादृशीनां अपां देवतानां 'प्रशस्तये' प्रशंसार्थं, 'देवाः' हे ऋत्विगादयो ब्राह्मणाः, 'वाजिनः' वेगवन्तः, 'भवत' शीघ्रं स्तुतिं कुरुत इत्यर्थः ॥१९॥

(५२) परोष्णिक् परः (१) ॥२१॥

जागतः (२) पादः परश्चेद् भवति, पूर्व्वौ च गायत्रौ, (३) तदा परोष्णिक् नाम भवति (४)। "उष्णिग्गायत्रौ जागतश्च" (३।१८) इत्यनेन गतार्थमेतत्, विशेषसंज्ञा-विधानार्थं पुनरुच्यते। प्रथमसूत्रे उष्णिग्ग्रहणमधिकारार्थम्॥ तत्रोदाहरणम्।

※ अग्ने वाजस्य गोमत ईशानः सहसो यहो।

अस्मे धेहि जातवेदो महि श्रवः॥ ऋ०।१म०।१३अ०।७९सू० ॥४॥ (५)

(५३) चतुष्पादृषिभिः ॥२२॥

समाप्तरेषतुर्भिः पादैकपिगेव भवति॥ तत्रोदाहरणम्।

१ परत इति ख ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ जागतो द्वादशाक्षर इत्यर्थः।

३ गायत्रौ अष्टाक्षरावित्यर्थः।

४ स एव जागतः पादः परतश्चेद्भवति, पूर्वौ च गायत्रौ, तदा परोष्णिक् नाम छन्दो भवति इति ख, ग, चिह्नितपुस्तकपाठः।

५ ऋग्वेद-प्रथममण्डल-त्रयोदशानुवाकैकोनाशीतितमसूक्तस्य चतुर्थी ऋगियम्। इयञ्चास्याः सायणाचार्यकृता व्याख्या। हे 'सहसो यहो' बलस्य पुत्र, 'अग्ने,' 'गोमत' बहुभिर्गोभिर्युक्तस्य, 'वाजस्य' अन्नस्य, 'ईशानः' ईश्वरः, भवसि। अतः 'अस्मे' अस्मासु, हे 'जातवेदः' जातधन, जातानां वेदितः, वा, अग्ने 'महि' प्रभूतं, 'श्रवः' अन्नं, 'धेहि' स्थापय॥ ४॥

※ नदं चतुर्दन्तीनां नदं यो युवतीनाम् ।
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ (ऋ० ८।५८।२)

इत्युष्णिगधिकारः ॥

(अथानुष्टुबधिकारः ।)

(५४) अनुष्टुब् गायत्रैः ॥२३॥

चतुष्पादित्यनुवर्त्तते । 'गायत्रैः' अष्टाक्षरैः पादैः, चतुष्पाच्छन्दः, अनुष्टुप्संज्ञं भवति । तत्रोदाहरणम् ।

※ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ ऋ०। १म०।
३अ०। १०सू॥ १ ॥[1]

(५५) त्रिपात् क्वचिज्जागताभ्याञ्च ॥२४॥

अनुष्टुबित्यनुवर्त्तते । गायत्रग्रहणञ्च । गायत्रेण[2] एकेन पादेन, द्वाभ्यां जागताभ्यां[3], क्वचित् त्रिपादनुष्टुबेव स्यात्[4] ॥

---

१ ऋग्वेद-प्रथममण्डल-तृतीयानुवाक दशमसूक्तस्य प्रथमा ऋगियम् इयञ्चास्याः सायणाचार्यकृता व्याख्या । हे 'शतक्रतो' बहुकर्मन्, बहुप्रज्ञ, वा, इन्द्र त्वां 'गायत्रिणः' उद्गातारः, 'गायन्ति' स्तुवन्ति । 'अर्किणः' अर्चनहेतुमन्त्रयुक्ताः होतारः, 'अर्कं' अर्चनीयमिन्द्रं, 'अर्चन्ति' शस्त्रगतैर्मन्त्रैः, प्रशंसन्ति । 'ब्रह्माणः' ब्रह्मप्रभृतय इतरे ब्राह्मणाः, त्वां 'उद्येमिरे' उन्नतिं प्रापयन्ति । तत्र दृष्टान्तः । 'उद्वंशमिव' यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीय कुलमुन्नतं कुर्वन्ति, तद्वत् ॥ १ ॥

२ गायत्रेण अष्टाक्षरेणेत्यर्थः ।

३ जागताभ्यां द्वादशाक्षराभ्यामित्यर्थः ।

४ चकाराद्गायत्रग्रहणञ्च गायत्रेणैकेन ततो द्वाभ्यां जागताभ्यां क्वचित् त्रिपादनुष्टुब् भवतीति ख, ग, चिह्नितपुस्तकपाठः ।

## (२९) मध्येऽन्ते च ॥२५॥

जागतयोः पादयोर्मध्येऽन्ते च यदा गायत्रः [१] पादो भवति, तदाप्यनुष्टुबेव स्यात्। मध्यपक्षे उदाहरणम्।

※ प्रपूषाा प्रधन्व वाजसातये।
परिवृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया ईयसे॥

अन्तपक्षे उदाहरणम्।

※ मा कस्मै धातमभ्यमित्रिणे नो मा कुत्रा नो गृहेभ्यो धेनवो गुः।
स्तनाभुजो अशिश्वीः॥ ऋ०। १म०।१७अ०। १२०सू०॥ ८॥[२]

इत्यनुष्टुबधिकारः॥

१ जागतयोर्द्वादशाक्षरयोः, गायत्रोऽष्टाक्षर इत्यर्थः।

२ ऋग्वेद-प्रथममण्डल-सप्तदशानुवाक-विंशत्यधिकशततमसूक्तस्य अष्टमी ऋगियम्। इयमस्याः सायणाचार्यकृता व्याख्या। हे अश्विनौ 'अमित्रिणे' मित्ररहिताय, 'कस्मै' चिदपि शत्रवे, 'नः' अस्मान्, 'माभिधातं' आभिमुख्येन मा व्यवस्थापयतं। अपिच 'नः' अस्माकं, 'गृहेभ्यः', सकाशात्, 'स्तनाभुजः' स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः 'धेनवः', 'अशिश्वीः' शिशुना वत्सेन रहिताः सत्यः, 'कुत्र'चित् अस्माभिरगम्ये प्रदेशे, 'मा गुः' मागच्छन्तु॥ ८॥

कार्यविशेषानुरोधवशतया विरलावकाशात् कतिपयानामृचां मण्डलनिर्देशादिकार्यं न जातम्। तदस्य पुनर्मुद्रणसमये तदर्थं सुधीभिर्यतनीयमिति विज्ञप्तिः।

(अथ बृहत्यधिकारः ।)

## (५७) बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

एको जागतः पादः, त्रयश्च गायत्राः(१), तदा बृहती नाम छन्दो भवति ॥

## (५८) पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥

बृहतीत्यनुवर्त्तते । पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये गायत्राः, तदा असौ बृहती पथ्या नाम छन्दो भवति ॥

## (५९) न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

पूर्वश्चेदित्यनुवर्त्तते । पूर्वश्चेज्जागतः पादो द्वितीयो भवति, शेषाश्च गायत्राः, तदा न्यङ्कुसारिणीनाम्नी बृहती भवति ॥

## (६०) स्कन्धोग्रीवी क्रौष्टुकेः ॥ २९ ॥

इयमेव न्यङ्कुसारिणी क्रौष्टुकेराचार्य्यस्य मतेन स्कन्धोग्रीवी नाम छन्दो भवति । आचार्य्यग्रहणं पूजार्थम् ॥

## (६१) उरोबृहती यास्कस्य ॥ ३० ॥

इयमेव न्यङ्कुसारिणी यास्कस्याचार्य्यस्य मतेन उरोबृहती-नाम्नी (२) भवति ॥

---

१ जागतगायत्रयोश्छन्दसोः सर्वत्र द्वादशाक्षराष्टाक्षरयोर्ग्रहणं बोद्धव्यम् ।

२ उरोबृहती नामेति क, ख, चिह्नितपुस्तकपाठः ।

(६२) **उपरिष्टाद् बृहत्यन्ते ॥ ३१ ॥**

यदा जागतः (१) पादोऽन्ते भवति, शेषाश्च गायत्राः, तदा उपरिष्टाद्बृहती नाम भवति ॥ तत्रोदाहरणम् ।

"सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्त्तिमनेहसं ॥ ऋ० ।३।१।१।

(६३) **पुरस्ताद्बृहती पुरः ॥ ३२ ॥**

स एव जागतः पादः पूर्वश्चेद्भवति, शेषाश्च गायत्राः, तदा पुरस्ताद्बृहती नाम भवति । "बृहती जागतस्त्रयश्च गायत्राः (३।२५)" इत्यनेनैव गतार्थमेतत् (२) मन्त्राविशेषदर्शनार्थं (३) पुनरुच्यते ॥

(६४) **क्वचिन्नवकाश्चत्वारः ॥ ३३ ॥**

क्वचिद् वेदे नवाक्षराश्चत्वारः पादा दृश्यन्ते, सापि बृहत्येव तत्रोदाहरणम् ।

"तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।
देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥ ऋ० १। १८। ११।

---

१ यत्र जागत इति ख, ग, चिह्नितपुस्तकपाठः ।

२ गतार्थत्वादिति ख, चिह्नितपुस्तकपाठः ।

३ मन्त्राविशेषप्रदर्शनार्थमिदमिति पुस्तकान्तरपाठः ।

(६५) वैराजौ गायत्रौ च ॥ ३४ ॥

यत्र वैराजौ पादौ, पूर्वौ, दशाक्षरौ भवतः, ततो गायत्रौ, च सापि[१] बृहती ॥

(६६) त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

त्रिभिर्जागतैः पादैश्छन्दो महाबृहतीनाम ॥

(६७) सतोबृहती ताण्डिनः ॥ ३६ ॥

इयमेव बृहती ताण्डिन आचार्य्यस्य मते सतोबृहती नाम भवति ॥

इति बृहत्यधिकारः ॥

(अथ पङ्क्त्यधिकारः ।)

(६८) पङ्क्तिर्जागतौ गायत्रौ च ॥ ३७ ॥

यदा द्वौ जागतौ पादौ, तथा गायत्रौ च, [२] तदा पङ्क्तिर्नाम छन्दः ॥

(६९) पूर्वौ चेदयुजौ सतःपङ्क्तिः ॥ ३८ ॥

यदा [३] पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागतावित्यर्थः । द्वितीयचतुर्थौ च गायत्रौ, तच्छन्दः सतःपङ्क्तिर्नाम ॥

---

१ गायत्री सापीति ख, ग, चिह्नितपुस्तकपाठः । अत्र सर्वत्र वैराजगायत्रशब्दाभ्यां दशाक्षराष्टाक्षरयोर्ग्रहणं बोद्धव्यम् ।

२ पादौ भवतस्ततो गायत्रौ चेति ख, चिह्नितपुस्तकपाठः । पुस्तकान्तरपाठश्च ।

३ यथेति ख, चिह्नितपुस्तकपाठ, पुस्तकान्तरपाठश्च ।

(३०) विपरीतौ च ॥ ३९ ॥

यदा तावेव पादौ विपरीतौ भवतस्तदापि सतःपङ्क्तिरेव। अयमर्थः, प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ जागतौ ॥

(३१) आस्तारपङ्क्तिः परतः ॥४०॥

यदा जागतौ पादौ परौ भवतः[1], गायत्रौ च पूर्वौ, तदा आस्तारपङ्क्तिर्नाम ॥

(३२) प्रस्तारपङ्क्तिः पुरतः ॥ ४१ ॥

यदा जागतौ पादौ पूर्वौ भवतः, गायत्रौ च परतः, तदा प्रस्तारपङ्क्तिर्नाम ॥ "पङ्क्तिर्जागतौ गायत्रौ च (३।३७) इत्यनेन गतार्थमिदं, मन्त्रविशेषज्ञापनार्थं पुनरुच्यते ॥

(३३) विष्टारपङ्क्तिरन्तः ॥ ४२ ॥

यदा जागतौ पादौ मध्ये भवतः, आद्यन्तयोश्च गायत्रौ, तदा विष्टारपङ्क्तिर्नाम ॥

(३४) संस्तारपङ्क्तिर्बहिः ॥ ४३ ॥

यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा संस्तारपङ्क्तिर्नाम च्छन्दः ॥

---

१ परतो भवत इति ख, ग, लिखितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

(७५) अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ॥४४॥

पञ्चाक्षरैश्चतुर्भिः पादैरक्षरपङ्क्तिर्नाम च्छन्दः। ननु चत्वारिंशदक्षरा पङ्क्तिच्छन्दः, तत् कथं पञ्चकाश्चत्वार इत्युच्यते। तत्रोत्तरम्। "द्वावप्यल्पशः" (३।४५) इत्यस्मात् सिंहावलोकित न्यायेनाल्पग्रहणमनुवर्त्तते, तेन पङ्क्तेरल्पत्वं विशेषात् प्रतिपादितं भवति ॥

(७६) द्वावप्यल्पशः ॥४५॥

पञ्चग्रहणमनुवर्त्तते। पञ्चाक्षराभ्यां पादाभ्यां अल्पशः-पङ्क्तिर्नाम च्छन्दो भवति, क्वचिदेव वेदे न सर्व्वत्र ॥

(७७) पदपङ्क्तिः पञ्च ॥४६॥

पञ्चका इत्यनुवर्त्तते। यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा पदपङ्क्तिर्नाम च्छन्दः ॥

(७८) चतुष्कषट्कौ त्रयश्च ॥४७॥

चकारः, पञ्चका इत्यनुकर्षणार्थः। यदा प्रथमश्चतुरक्षरः पादः, द्वितीयः षड़क्षरः, ततस्त्रयः पञ्चाक्षराः, तदा पञ्चपदा पङ्क्तिरेव ॥

(७९) पथ्या पञ्चभिर्गायत्रैः ॥४८॥

पञ्चभिरष्टाक्षरैः पादैः पथ्या नाम पङ्क्तिर्भवति। अस्योदाहरणम्।

अस्त्वमग्नीमदन्त होति ॥ (ऋ० १।८२।२॥

इति पङ्क्त्यधिकारः ॥

अथ त्रिष्टुब्जगत्यधिकारः।)

(८०) जगती षड्भिः ॥ ४९ ॥

गायत्रैरित्यनुवर्त्तते। गायत्रैः षड्भिः पादैर्जगतीनामच्छन्दो भवति ॥

(८१) एकेन त्रिष्टुब् ज्योतिष्मती ॥ ५० ॥

त्रिष्टुभः प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्या एव सम्बन्धः। एकेन त्रैष्टुभेन पादेनाधिकारागतैश्चतुर्भिर्गायत्रैः पञ्चपात्त्रिष्टुब्, ज्योतिष्मती नाम[1])। त्रैष्टुभेन सह पञ्चभिर्गायत्रैरित्युक्ते चत्वार एव गायत्राः पादा लभ्यन्ते। यथोपाध्यायेन सह पञ्च शिष्या आगता इत्युक्ते उपाध्यायपञ्चमाः प्रतीयन्ते ॥

(८२) तथा जगती ॥ ५१ ॥

एकेन जागतेन, पादेन, चतुर्भिर्गायत्रैः, पञ्चपाज्जगती, ज्योतिष्मती नाम(२) ॥

१ एकेनेति "पथ्यापञ्चभिर्गायत्रैः (३।४५) इत्यतो गायत्रपादस्य प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्यैव सम्बन्धः। गायत्रैरेकेन पादेनाधिकारागतैश्चतुर्भिस्त्रैष्टुभैश्चतुष्पात् त्रिष्टुब् ज्योतिष्मती नामेति ख, चिह्नितपुस्तकपाठः।

२ एकेन गायत्रेण पादेन त्रिभिर्जागतैश्चतुष्पाज्ज्योतिर्नाम जगती भवति इति ख, घ,चिह्नितपुस्तकपाठः। ग.चिह्नितपुस्तकपाठे ज्योतिष्मतीत्यत्र विशेषः।

## (८३) पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

प्रथमेन त्रैष्टुभेन पादेन, शेषैश्च गायत्रैः, पुरस्ताज्ज्योतिर्नाम त्रिष्टुब् भवति। पूर्वेणैव गतार्थत्वाद् विशेषसञ्ज्ञाज्ञापनार्थमिदम्। तथा जगतीत्यनुवर्त्तनीयम्। तेनाद्येन जागतेन पादेन, चतुर्भिश्च गायत्रैः, पुरस्ताज्ज्योतिर्नाम जगती भवति[१] ॥

## (८४) मध्येज्योतिर्मध्यमेन ॥ ५३ ॥

यदा मध्यमस्त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा मध्येज्योतिर्नाम त्रिष्टुब् भवति। मध्येज्योतिरित्यलुक्-समासः। तथा जगतीत्यनुवर्त्तनीयं। तेन मध्यमेन जागतेन उभयतश्च द्वौ द्वौ गायत्रौ [२] तदा मध्येज्योतिर्नाम जगती भवति[३] ॥

## (८५) उपरिष्टाज्ज्योतिरन्तेन ॥ ५४ ॥

यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभः, तदा

---

१ प्रथमेन गायत्रेण पादेन शेषैश्च त्रैष्टुभैस्त्रिभिः पुरस्ताज्ज्योतिस्त्रिष्टुब् नाम भवति। पूर्वेणैव गतार्थत्वाद्विशेषसञ्ज्ञाज्ञापनार्थमिदम्। तथा जगतीत्यनुवर्त्तनीयं। तेनाद्येन गायत्रेण पादेन त्रिभिर्जागतैः पुरस्ताज्ज्योतिर्नाम जगती इति ख-चिह्नितपुस्तकपाठः।

२ उभयतश्च गायत्राभ्यामिति पुस्तकान्तरपाठः।

३ यदा मध्यमो गायत्रः तृतीयः पादो भवति, उभयतश्च द्वौ त्रैष्टुभौ यदा पूर्वौ, चान्तिमश्चैकस्त्रैष्टुभस्तदा मध्येज्योतिर्नाम त्रिष्टुब् भवति। मध्येज्योतिरित्यलुक्-समासः। तथा जगतीत्यनुवर्त्तते। एकेन गायत्रेण मध्यमेन तृतीयेनोभयतश्च जागताभ्यां। प्रथमद्वितीयाभ्यां चतुर्थेन मध्येज्योतिर्जगती नाम भवति इति ख-चिह्नितपुस्तकपाठः।

उपरिष्टाज्ज्योतिर्नाम त्रिष्टुब् भवति। तथा जगतीत्यनुवर्त्तनीयम्। तेनान्त्येन जागतेन, शेषैश्च गायत्रैस्त्रिभिः, उपरिष्टाज्ज्योतिर्नाम जगती भवति(१)॥

(८६) एकस्मिन् पञ्चके छन्दः शङ्कुमती॥ ५५॥

यदैकः पञ्चाक्षरः पादो भवति, त्रयश्च षडक्षराः, तदा शङ्कुमती नाम गायत्री(२)। छन्दोग्रहणे प्रकृते, पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थं। तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षिता शङ्कुमती भवति। इतरथा ह्यनन्तरं सम्प्रत्ययः स्यात्(३)॥

(८७) षट्के ककुम्मती(४)॥ ५६॥

एकस्मिन् षडक्षरे पादे, अन्येषु यथालक्षणमुपात्तेषु, छन्दोमात्रं ककुम्मती नाम(५) भवति॥

(८८) त्रिपादणिष्ठमध्या पिपीलिकमध्या॥ ५७॥

यदाद्यन्तौ पादौ बह्वक्षरौ, मध्यमोऽल्पतराक्षरः(६), तदाऽणिष्ठमध्या सती पिपीलिकमध्या नाम भवति। अयमर्थः,

१ यदा त्रयस्त्रिष्टुभः पादाः भवन्ति, अन्त्यं च गायत्रस्तदोपरिष्टाज्ज्योतिस्त्रिष्टुब् नाम भवति। तथा जगतीत्यनुवर्त्तनीयम्। तेनान्त्येन गायत्रं च शेषैश्च जागतैस्त्रिभिरुपरिष्टाज्ज्योतिर्जगती नाम भवति इति क, चिह्नितपुस्तकपाठः।

२ यदैकः पञ्चाक्षरः पादो भवति त्रयश्च द्वादशाक्षरास्तदा शङ्कुमती जगती नाम छन्दो भवति इति क, चिह्नितपुस्तकपाठः।

३ ह्यनन्तरमेव मतुपप्रत्ययः स्यात् इति क, ग, चिह्नितपुस्तकपाठः।

४ ककुम्मती इति ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

५ छन्दोमात्रं तु ककुम्मती नाम जगती इति क, ग, चिह्नितपुस्तकपाठः।

६ मध्यमोऽल्पतमाक्षर इति क, ग, चिह्नितपुस्तकपाठः।

आद्यन्तौ पादौ अष्टाक्षरौ (१), मध्यमस्त्र्यक्षरः, एवं त्रिपाद् गायत्री पिपीलिकमध्या नाम भवति (२)। एवं चतुरक्षरे पञ्चाक्षरेऽपि मध्यमे पादे पिपीलिकामध्या सिद्ध्यति। यत् किञ्चित्त्रिपाच्छन्दः (३), लघुमध्यमपादं, तत्सर्वं पिपीलिकामध्यमुच्यते॥

(८९) विपरीता यवमध्या॥ ५८॥

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमश्च बह्वक्षरः, सा गायत्री यवमध्या नाम भवति। एवमुष्णिगादिष्वपि योज्यम्॥

(९०) ऊनाधिकेनैकेन (४) निवृद्भुरिजौ॥ ५९॥

चतुर्विंशत्यक्षरा गायत्री, एकेनाक्षरेण न्यूनेन, सा निवृदिति विशेषसञ्ज्ञां लभते। एकेनाधिकेन भुरिगिति। एवमुष्णिगादिष्वपि द्रष्टव्यम्॥

(९१) द्वाभ्यां विराट्स्वराजौ॥ ६०॥

ऊनाधिकग्रहणमनुवर्त्तते (५)। द्वाभ्यामक्षराभ्यां ऊनाधिकाभ्यां (६) गायत्री यथाक्रमं विराटस्वराट्-सञ्ज्ञा भवति(७)।

---

१ पादौ षडक्षरौ इति पुस्तकान्तरपाठः।

२ आद्यन्तौ पादौ एकादशाक्षरौ मध्यमः षडक्षरः, एवं त्रिपादुष्णिक् पिपीलिकमध्येत्यर्थः इति ख. ग. चिह्नितपुस्तकपाठः।

३ यत् किञ्चिच्छन्द इति ख चिह्नितपुस्तकपाठः।

४ न्यूनाधिकेनैकेनेति पुस्तकान्तरपाठः।

५ न्यूनाधिकपदद्वयमनुवर्त्तते इति क. चिह्नितपुस्तकपाठः।

६ न्यूनाधिकाभ्यामिति क. चिह्नितपुस्तकपाठः।

७ गायत्र्यादीनि यथाक्रमेण विराट्स्वराट्सञ्ज्ञानि भवन्तीति पुस्तकान्तरपाठः।

## (६०) आदितः सन्दिग्धे ॥ ६१ ॥

यदा षड्विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यं, किं गायत्री स्वराट्, उत (१) उष्णिग्विराडिति । एवं सन्दिग्धे सति छन्दसि आदिभूतात् पादात् निर्णयः कर्त्तव्यः । यदि प्रथमः पादो गायत्रस्तदा (२) गायत्रेयवासौ । अथोष्णिहस्तदोष्णिगिति । एवं सर्वत्र ॥

## (६०) देवतादितश्च ॥ ६२ ॥

इदमपरं निर्णयनिमित्तमुच्यते । सन्दिग्धे छन्दसि देवतादेश्च निर्णयः कर्त्तव्यः । 'आदि'ग्रहणं स्वरादिपरिग्रहार्थम् । कस्य छन्दसः का देवता यथा निर्णयः कर्त्तव्यः । इत्यपेक्षायामिदमुच्यते ।

## (६४) अग्निः सविता सोमो वृहस्पतिर्वरुण इन्द्रो-विश्वेदेवाः (३) ॥ ६३ ॥

गायत्र्यादीनां जगतीपर्य्यन्तानां यथाक्रममग्न्यादयो देवता वेदितव्याः । तत्र सन्दिग्धे छन्दसि, यदाऽऽग्नेयं तदा गायत्री, यदि सावित्रं तदोष्णिक् । एवं सर्व्वत्र । वैदिकेष्वेव छन्दःसु निह-

---

१ उताहो इति पुस्तकान्तरपाठः ।

२ यदि प्रथमः पादो गायत्र्यास्तदा इति क, ग, चिह्नितपुस्तकपाठः । यदा प्रथमः पादो गायत्र्यास्तदेति पुस्तकान्तरपाठः ।

३ मित्रावरुणा इन्द्रो विश्वे देवा देवता इति क, चिह्नितपुस्तकपाठः ।

वृरिजौ, तथा विराट्स्वराजौ दृश्येते, न लौकिकेषु। अतो लौकिकेषु(१) सन्देहाभावान्निर्णयनिमित्तभूता देवतादयो नेष्यन्ते।

(६४) स्वराः षड्जादयः॥ ६४॥

षड्जर्षभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाः स्वरा गायत्र्यादिषु क्रमेण द्रष्टव्याः॥

(६५) सित-सारङ्ग-पिशङ्ग-कृष्ण-नील-लोहित-गौरा वर्णाः॥६५॥

गायत्र्यादिषु क्रमेण वर्णा वर्णनिर्णयनिमित्तमभिधीयन्ते॥

(६६) आग्निवेश्य-काश्यप-गौतमाङ्गिरस-भार्गव-कौशिक-वाशिष्ठानि गोत्राणि इति॥ ६६॥

गायत्र्यादीनां क्रमेणैतानि गोत्राणि, भवन्तीति वाक्यशेषः। श्यामान्यतिछन्दांसि, रोचनाभाः कृतयः (२), इत्येवमधीयतेऽतिछान्दसाः(३)। तन्नोपपद्यते। कृतीनामतिच्छन्दसाञ्च निवृद्भुरिजोर्विराट्स्वराजोश्च प्रदेशाभावात् कश्चिन्नास्ति संशयः।

१ नातो लौकिकच्छन्दस्विति ख. ग. चिह्नितपुस्तकपाठः। अतो लौकिकेषु इति पुस्तकान्तरपाठः।

२ अथ रोचनाभाः कृतयः श्यामान्यतिच्छन्दांसीति ख. चिह्नितपुस्तकपाठः।

३ इत्येवमादिकमधीयते छान्दसा इति ख, ग, चिह्नितपुस्तकपाठः।

यस्य निर्णयनिमित्तं वर्णविन्यासः क्रियते, (१) तदपि ऋषि-देवता-स्वर-वर्णानां ज्ञानाद्विःश्रेयसमिच्छन्ति छान्दसाः (२) ॥

इति भट्टहलायुधकृतौ छन्दोवृत्तौ (३) तृतीयोऽध्यायः ॥ ३ ॥

(अथ चतुर्थोऽध्यायः।)

## (९८) चतुःशतमुत्कृतिः ॥ १ ॥

चतुरधिकं शतं चतुःशतं। मध्यमपदलोपी समासः। अथवा चत्वारि च शतञ्च चतुःशतं। द्वन्द्व-समासः। कर्मधारयपक्षस्तु(४) नेष्यते। तत्र चतुःशतानीति प्राप्नोति। यत्र चतुःशतमक्षराणां सङ्ख्या भवति, तत्, उत्कृतिर्नाम च्छन्दः ॥

## (९९) चतुरश्चतुरस्त्यजेदुत्कृतेः ॥ २ ॥

चतुःशताक्षरात् छन्दसः क्रमेण चतुरश्चतुरः सङ्ख्याविशेषान् त्यजेत्। एतदुक्तं भवति, उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांसि अन्यानि स्थापयेत्, अष्टचत्वारिंशदक्षरं यावत् ॥

## (१००) तान्यभिसंव्याप्रेभ्यः कृतिः ॥ ३ ॥

'तानि' उत्कृतेरनन्तराणि च्छन्दांसि, अभि सम् वि आङ् प्र

---

१ यस्य निर्णयनिमित्तस्य वर्णोपन्यासः क्रियते इति ग, चिह्नितपुस्तकपाठः। एतदनन्तरमेवाध्यायसमाप्तिवाक्यमस्ति। तदपीत्यादिकः पाठोऽत्र नास्ति। ख, चिह्नितपुस्तके तु तदपीति पदद्वयं नास्ति, तत्र ऋषिदेवतेत्यादिकः सम्पूर्णः पाठोऽस्ति।

२ चतुर्णामां ज्ञानतो वर्णा इति, क, चिह्नितपुस्तकप्रान्तोल्लिखितः पाठो विन्यस्तः।

३ भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ इति ख, ग, चिह्नितपुस्तकपाठः।

४ कर्मधारयसमासस्तु इति पुस्तकान्तरपाठः।

इत्येतेभ्यः पराणि कृतिसञ्ज्ञानि भवन्ति। तत्र शताक्षरं छन्दोऽभिकृतिः। षण्णवत्यक्षरं, सङ्कृतिः। द्वानवत्यक्षरं, विकृतिः। अष्टाशीत्यक्षरम्, आकृतिः। चतुरशीत्यक्षरं, प्रकृतिः॥

(१०१) **प्रकृत्या च॥४॥**

उपसर्गवर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनैतदुक्तं भवति, अशीत्यक्षरं, कृतिः (१)॥

(१०२) **धृत्यष्टि-शर्करी-(२) जगत्यः॥५॥**

कृतेरधस्तादृति अष्टि शर्करी जगती इत्येते शब्दाः क्रमेण व्यवस्थापनीयाः॥

(१०३) **पृथक् पृथक् पूर्वत एतान्येवैषाम्॥६॥**

'एषां' धृत्यादीनां, 'पूर्व्वतः पृथक् पृथक्', 'एतान्येव' शब्दरूपाणि, विन्यसेत्। पृथक्-पृथग्-ग्रहणं प्रत्येकं पूर्व्वत्वज्ञापनार्थम्। अन्यथा हि समुदायपूर्व्ववृत्तित्वमेषां (३) स्यात्। तेनायमर्थः, धृतिशब्दात् पूर्व्वं धृतिशब्दः, अष्टिशब्दात् पूर्व्वमष्टिशब्दः, शर्करीशब्दात् पूर्व्वं शर्करीशब्दः, जगतीशब्दात् पूर्व्वं जगतीशब्दः॥

---

१ अशीत्यक्षरं छन्दः कृतिर्नामेति ख. ग. चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ शक्करीति ख. ग. चिह्नितपुस्तकपाठः। शक्क्करीति पुस्तकान्तरपाठः। इत्थ सर्व्वत्र शर्करीशब्दपाठान्तरं ज्ञेयम्।

३ समुदायपूर्व्वत्वमेषामिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

(१०४) द्वितीयं द्वितीयमतितः ॥ ७ ॥

अत्र द्वितीय द्वितीयं शब्दरूपम् (१) अतिशब्दात् परतः प्रयोक्तव्यम्। एवं सत्युत्तरेषां छन्दसामेताः सञ्ज्ञाः क्रमेण भवन्ति। तत्र षट्सप्तत्यक्षरम्, अतिधृतिः(२)। द्वासप्तत्यक्षरं, धृतिः। अष्टषष्ट्यक्षरम्, अत्यष्टिः। चतुःषष्ट्यक्षरम्, अष्टिः। षष्ट्यक्षरम्, अतिशक्करी। षट्पञ्चाशदक्षरं, शक्करी। द्वापञ्चाशदक्षरम्, अतिजगती। अष्टाचत्वारिंशदक्षरं, जगती॥

(१०५) अत्र (३) लौकिकम् ॥ ८ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। पूर्व्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृत्यार्य्यादीनां चूलिकापर्य्यन्तानां लौकिकत्वमेव। समान्यादीनामुत्कृतिपर्य्यन्तानां वैदिकत्वं लौकिकत्वञ्च। 'अत्र' वैदिकच्छन्दसां प्रस्तावे, प्रसङ्गाद् वेदवदनादिमुनिपारम्पर्य्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्य्यादिदण्डकपर्य्यन्तं 'लौकिक'च्छन्दोजातमधिक्रियते। तन्मूलत्वात् काव्यस्य। काव्यञ्च कीर्त्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः॥

(१०६) आत्रैष्टुभाच्च यदार्षम् ॥ ९ ॥

आङभिविधौ। त्रिष्टुबेव त्रैष्टुभं, स्वार्थे तद्धितः। गायत्र्यादि-

१ शब्दस्वरूपमतित इति ग, चिह्नितपुस्तकपाठः।

२ षट्सप्तत्यक्षरं छन्दोऽतिधृतिरिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तर-पाठश्च।

३ चात्रेति ख, ग, चिह्नितपुस्तकपाठः।

त्रिष्टुप्पर्य्यन्तं यदार्षं छन्दोजातं, वैदिके व्याख्यातं, लौकिके च तत्, तथैव द्रष्टव्यं। किं तदार्षं ? चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरोष्णिक्। द्वात्रिंशदक्षराऽनुष्टुप्। षट्त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। 'चः' समुच्चये ॥

(१०७) पादश्चतुर्भागः (१) ॥ १० ॥

'चतुर्भागः' (२) चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः, पादसञ्ज्ञां लभते। गायत्र्याः षड़क्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम् (३)। समवृत्तविषयमेतत् ॥

(१०८) यथावृत्तसमाप्तिर्वा ॥ ११ ॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः। 'वा'शब्दो व्यवस्थितविभाषा। उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात् ॥

आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम्।
तृतीयमक्षरच्छन्दः (४) छन्दस्त्रेधा तु लौकिकम् ॥

---

१ पादश्चतुर्थभाग इति पुस्तकान्तरपाठः।

२ चतुर्थो भागश्चतुर्थभाग इति पुस्तकान्तरपाठः।

३ बोद्धव्यमिति पुस्तकान्तरपाठः।

४ तृतीयमक्षरं छन्द इति ख, ग, चिह्नितपुस्तकपाठः।

आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम्।
वैताल्यादि चूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम्॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च (१)।

तत्रादौ तावदार्य्यालक्षणमिहार्थं गणसञ्ज्ञां करोति।

(१०९) ल्नः समुद्रा गणः॥ १२॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुःसङ्ख्योपलक्षणार्थम्। चतुर्णां लकाराणां, गणः, इत्येषा सञ्ज्ञा विधीयते।

(११०) गौ गन्तमध्यादिर्ल्गश्च॥ १३॥

अनेन गणस्य विन्यासभेदं दर्शयति। स हि गणः कदाचिद् गुरुद्वयेन भवति, कदाचिदन्तेनैकेन गुरुणा, कदाचिन्मध्यमेन, कदाचिदाद्येन, कदाचिच्चतुर्भिर्लघुभिः। षष्ठस्य भेदस्याभावात्(२) विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद् गकारेण बहुव्रीहिः। द्वन्द्वात्परो यः श्रूयते, लभतेऽसौ प्रत्येकाभिसम्बन्धम्। द्वौ गकारौ, चत्वारो लघवो भवन्ति,

---

१ आर्य्याद्युद्गीतिपर्यन्तं गणच्छन्दः। वैतालीयादिचूलिकापर्यन्तं मात्राच्छन्दः। समान्यादिकमुत्कृतिपर्यन्तमक्षरच्छन्द इति ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ द्विगुरुकस्य (ऽऽ) चतुष्कलगणस्य मात्राप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः पञ्चैव भेदा भवन्ति। ते च भेदा द्विगुरुकाङ्कादेव क्रमशः ऽऽ,॥ऽ,।ऽ।,ऽ॥,॥॥, एते पञ्च भेदा जायन्ते। सूत्रेऽप्येते प्रस्तारक्रमेण पञ्चैव वर्णिताः। अतोऽत्र षष्ठभेदस्याभाव इति भावः।

स एको गणः(ऽऽ)। गकारोऽन्ते यस्य स गन्तो द्वितीयो गणः(॥ऽ)। गकारो मध्ये यस्य स गमध्यस्तृतीयो गणः (।ऽ।)। गकार आदिर्यस्य (१) स गादिश्चतुर्थो गणः(ऽ॥)। नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो गणः(॥॥)। एवं गणेषु सिद्धेषु इदानीमार्य्यालक्षणं करोति॥

(अथार्थाधिकारः।)

## (१११) स्वरा अर्द्धञ्चार्य्यार्द्धम्॥ १४॥

गणग्रहणमनुवर्त्तते। स्वरा इति सप्तानां सञ्ज्ञा। यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्द्धञ्च गणस्य, तदार्य्यार्द्धं निष्पद्यते। द्वितीयमप्यर्द्धं तादृशमेव। समप्रविभागेऽर्द्धशब्दः। यद्येवम्, अर्द्धशब्दस्य अर्द्धं न पुंसकम् इत्यनेनैकदेशिसमासे सति पूर्वनिपातः प्राप्नोति। यथा, अर्द्धाढकम्, अर्द्धपलम्, अर्द्धखारी, इति। नैष दोषः। सत्यपि समप्रविभागत्वे सम्बन्धमात्रस्यात्र विवक्षितत्वात् समप्रविभागस्यार्द्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनात्। यथा, तुलार्द्धेन गां क्रीणाति (२)।

पण्यार्द्धक्रीतताम्बूलचर्वणाद् गर्वितानना:।
अनभ्यासाद् गलज्ज्वाला यान्त्येते वारयात्रिकाः॥

तथा अत्र समप्रविभागत्वेऽप्यर्द्धशब्दस्यैकदेशिसमासदर्शनाच्च।

---

१ मकार आदौ यस्येति पुस्तकान्तरपाठः।

२ यथा द्रुमार्द्धेन गां क्रीणाति। यथार्द्धमर्द्धेन क्रीणातीति च. चिह्नितपुस्तकपाठः।

अर्द्धचन्द्रं दधन्मूर्द्ध्नि पातु वः पार्वतीपतिः ।
कालकूटविषं हन्तुं सङ्गृहीतमिवामृतम् ॥

तथाच ।

तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥

अतार्द्धस्य लक्षणं कुर्व्वाण एवं ज्ञापयत्याचार्य्यः, यदार्य्यायामर्द्धान्तरपादव्यवस्था नास्ति । तेन द्वीपादन्यस्मादित्यादौ गणत्रयस्यान्ते गुरुत्वं (१) न स्यात् ॥

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

(११२) अत्रायुङ् न ज् ॥ १५ ॥

'अत्र' आर्य्याच्छन्दसि, 'अयुग्' गणः, प्रथमस्तृतीयः पञ्चमः सप्तमश्च, 'न जगणः' मध्यगुरुर्न (२) कर्त्तव्यः । शेषास्तु कामतोऽत्र भवन्ति ॥

(११३) षष्ठो ज् ॥ १६ ॥

आर्य्याच्छन्दसि षष्ठो गणो मध्यगुरुरेव (३) भवति । अत्रोदाहरणम् ।

---

१ अन्यस्मादपि, घटयति, इत्युभयत्र ह्रस्वेकारस्य सति पादान्ते, 'सन्ते' (२।१०) इति गुरुत्वं भवेदिति भावः ।

२ मध्यं गुरुर्नेति ख, ग, चिह्नितपुस्तकपाठः ।

३ अत्रार्य्याच्छन्दसि षष्ठो गणो मध्यं गुरुरेवेति ख, चिह्नितपुस्तकपाठः ।

भ० १ स० २ द्वि०३ द्वि०४ स०५ ज०६ सर्व०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

सा जयति जगत्यार्य्या देवी दिवमुत्पतिष्णु रतिरुचिरा(१)।

द्वि०१ ज०२ स०३ भ०४ द्वि०५ ज०६ ए०७गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

याद्दश्यतेऽम्बरतले (२) कंसवधोत्पातविद्युदिव (३) ॥

(११४) न्लौ वा ॥ १७ ॥

षष्ठ इत्यनुवर्त्तते। आर्य्यायाः षष्ठो गणः (IIII) सर्वलघुर्वा भवति ॥ तत्रोदाहरणम्।

---

१ द्यामुत्पतिष्णुरतिरुचिरेति क, चिह्नितपुस्तकपाठः।

२ या दृश्यते गगनतले इति पुस्तकान्तरपाठः।

३ सा जयतीत्यस्य गणविभागदर्शनं यथा. 'सा जय' इति आदिगुर्वात्मको भ (ऽII) गण एकः १। 'तिजग' इति अन्तगुरुमान् स (IIऽ) गणो द्वितीयः २। 'त्यार्य्या' इति द्विगुरुको (ऽऽ) गणस्तृतीयः ३। 'देवी' इति च द्विगुरुको (ऽऽ) गणश्चतुर्थः ४। 'दिवमु' इति अन्तगुरुकः स(IIऽ)गणः पञ्चमः ५। 'त्पतिष्णु' इति मध्यगुरुर्ज (IऽI) गणः षष्ठः ६। 'रतिरुचि' इति चतुर्लघुरूपो (IIII) गणः सप्तमः ७। 'रा' इति एको गुरुः। एवमार्य्यायाः प्रथमार्द्धे गुरुपर्यन्ताः सप्त गणा भवन्ति। तत्र षष्ठो जगणः कर्त्तव्यः। अन्येषु यथेच्छाचारः। 'याद्द' इति द्विगुरुको (ऽऽ) गण एकः १। 'श्यतेम्ब' इति मध्यगुरुर्ज (IऽI) गणो द्वितीयः २। 'रतले' इति अन्तगुरुमान् स (IIऽ) गणस्तृतीयः ३। 'कंसव' इति आदिगुरुर्भ (ऽII) गणश्चतुर्थः ४। 'धोत्पा' इति द्विगुरुरूपो (ऽऽ) गणः पञ्चमः ५। 'तविद्यु' इति मध्यगुरुमान् ज (IऽI) गणः षष्ठः ६। 'दि' इति एकलघुरूपो (I) गणः सप्तमः ७। 'व' इति एको (ऽ) गुरुः, पादान्तस्थयोर्गुरुत्वातिदेशात्।

द्वि०१ ज०२ द्वि०३ द्वि०४ द्वि०५ सर्व०६ सर्व०७ गु०

ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ

रूपान्तरेण देवीं तामेव स्तौमि, सपदि किल मह्विषः (१)।

द्वि०१ भ०२ भ०३ भ०४ स०५ ए०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

पादस्पर्शसुखादिव मीलितनयनोऽभवद्यस्याः (२)॥

(११४) न्लौ चेत् पदं द्वितीयादि। १८॥

षष्ठो गणः सर्वलघुश्चेद् भवति, तदा द्वितीयादक्षरादारभ्य पदं प्रवर्त्तते (३)। पूर्वमेवोदाहरणम्।

१ सितमहिष इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ रूपान्तरेणेत्यस्या गणविभागव्याख्यानदर्शनं यथा, 'रूपा' इति द्विगुरुकः (ऽऽ) एको गणः १। 'न्तरेण' इति ज (।ऽ।) गणो द्वितीयः २। 'देवीं' इति द्विगुरुकः (ऽऽ) गणस्तृतीयः ३। 'तामे' इति च द्विगुरुकः (ऽऽ) गणश्चतुर्थः ४। 'व स्तौ' इति च द्विगुरुकः (ऽऽ) गणः पञ्चमः ५। 'मि सपदि' इति सर्वलघुमान् (।।।।) गणः षष्ठः ६। 'किल मह्वि' इति अपरः सर्वलघुमान् (।।।।) गणः सप्तमः ७। 'ष' इति एको गुरुः (ऽ)। एवमस्याः प्रथमेऽर्द्धे गुरुयुक्ताः सप्त गणा भवन्ति। 'पादस्' इति द्विगुरुकः (ऽऽ) गणः प्रथमः १। 'स्पर्शसु' इति भ (ऽ।।) गणो द्वितीयः २। 'खादिव' इति च भ (ऽ।।) गणस्तृतीयः ३। 'मीलित' इति पुनर्भ (ऽ।।) गणश्चतुर्थः ४। 'नयनो' इति स (।।ऽ) गणः पञ्चमः ५। 'ऽभ' इति एकलघुरूपो (।) गणः षष्ठः ६। 'वद्य' इति द्विगुरुकरूपो (ऽऽ) गणः सप्तमः ७। 'स्याः' इति एको गुरुः॥ इत्थमस्या उत्तरदलेऽपि सोपेताः सप्तगणा जायन्ते। अस्या उभयदले एव षष्ठो गणः ६ सर्वलघुरेवास्ति, अतः सर्वलघुमती इयमपरा। बोद्धव्या।

एवं सर्वासामार्याच्छन्दःसु वक्ष्यमाणेषु आर्योदाहरणोपरिन्यस्त साङ्केतिकवर्णानां विभागो यथासम्भवं बोद्धव्यः। विस्तारभयान्न तत्र तत्रैतादृशगणविभागो दर्शितः, दर्शितं केवलं सङ्केतमात्रम्।

३ षष्ठगणस्य चतुर्लघुरूपस्योदाहरणभूतानां चतुर्णामक्षराणां मध्ये द्वितीयादक्षरादारभ्य तृतीयादि पदं प्रवर्त्तते इति तात्पर्यः। यथा, 'मि सपदि' इति सर्वलघुरूपस्य

## (११९) सप्तमः प्रथमादि ॥ १९ ॥

षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ वा (।।।।) जाते सप्तमो गणः सर्वलघुश्चेत् भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्त्तते (१)। तत्रोदाहरणम् (२)।

द्वि०१ भ०२ द्वि०३ ज०४ द्वि०५ ज०६ सर्व०७ गु०

ऽ ऽ ऽ। । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । । । ऽ

**ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुत-चरणः।**

सर्व०१ ज०२ द्वि०३ द्वि०४ द्वि०५ ज०६ ए०७ गु०

। । । । । ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ

**सकलसुकृतैकपुञ्जः श्रीमान् मुञ्जश्चिरञ्जयति (१२)॥**

सर्व०१ ज०२ द्वि०३ द्वि०४ सर्व०५ सर्व०६ सर्व०७ गु०

। । । । । । ऽ ऽ ऽ ऽ । । । । । । । । । । । । ऽ

**जयतिभुवनैककवीरः सीरायुध-तुलित-विपुल-बलविभवः।**

षष्ठगणस्य 'भि'कारं प्रथमाक्षरं परित्यज्य सपदीत्यस्य सकारात् द्वितीयाक्षरात् पदप्रवृत्तिर्जाता। अत एवास्या अपि रूपान्तरेणेति पूर्वपठितमेवोदाहरणं बोद्धव्यम्।

१ सप्तमगणस्य प्रथमाक्षरादारभ्य सुबन्तादिपदं प्रवर्त्तते न तु तत्र प्रथमाक्षरं गणविभागार्थं पूर्वमाश्लिष्यते इति स्पष्टार्थः। यथास्या उदाहरणे 'तचक्र' इति षष्ठगणस्य मध्यगुरोरुदाहरणाक्षरेभ्यः परभूतानां सप्तमगणस्योदाहरणभूतानां 'नुतचर' इति चतुर्णामक्षराणां प्रथमात् 'नु' इत्यक्षरात् सुबन्तादिपदप्रवृत्तिर्जाता। न तु तदक्षरं गणविभागनिष्पत्त्यर्थं पूर्वमाश्लिष्टम्।

२ षष्ठमध्यगुरुगणात् परतः सप्तमसर्वलघुगणवत्यार्योदाहरणं ब्रह्म क्षत्रेति। षष्ठसर्वलघुगणात् परतः सप्तमसर्वलघुगणवत्यार्योदाहरणं जयतीति। अनयोर्गणप्रभेदद्वयमनुक्तयोरुकाक्षरमस्तकोपरि क्रमं वर्णते। तत् पूर्ववद् बोद्धव्यम्।

सर्व० १ ज० २ सर्व० ३ भ० ४ द्वि० ५ ज० ६ द्वि० ७ गु०

। । । । ऽ । । । । । ऽ । । ऽ ऽ । ऽ ऽ ऽ

अनवरतवित्त-वितरण निर्जित-चम्पाधिपो मुञ्जः॥

(११७) अन्त्ये पञ्चमः॥ २०॥

अन्ते भवमन्त्यं, दिगादित्वाद् यत्। अन्त्ये द्वितीयेऽर्द्धे पञ्चमश्चेद् गणः (।।।।) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्त्तते। तत्रोदाहरणम्।

सर्व० १ भ० २ द्वि० ३ भ० ४ भ० ५ ज० ६ भ० ७ गु०

। । । । । । ऽ ऽ । । ऽ । । ऽ । ऽ । ऽ । ऽ । । ऽ

स जयति वाक्पतिराजः सकलार्थिमनोरथैक-कल्पतरुः।

द्वि० १ ज० २ भ० ३ द्वि० ४ सर्व० ५ प० ६ भ० ७ गु०

ऽ ऽ । ऽ । ऽ । । ऽ ऽ । । । । । ऽ । । ऽ

प्रत्यर्थिभूत-पार्थिव-लक्ष्मीहठहरण-दुर्ल्ललितः (१)॥

(११८) षष्ठश्च ल्॥ २१॥

अन्त्य इत्यनुवर्त्तते। 'अन्त्ये' द्वितीयेऽर्द्धे, मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते, तदपवादो लकारो विधीयते। पूर्वमेवोदाहरणम्॥

१ अस्या उत्तरार्द्धे हठहरेति पञ्चमस्य सर्वलघुगणस्य प्रथमादक्षरात् हकारात् आरभ्य पदोत्पत्तिः, न तु चतुर्थगणावयवीभूतादक्षरात्। अतः प्रथमादिपद-प्रवृत्तिमती आर्येयम्।

## (११९) त्रिषु गणेषु पादः पथ्याद्ये च ॥ २२ ॥

चकारोऽन्त्य इत्यनुकर्षणार्थः । यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्य्या पथ्या नाम भवति । तद्यथा,

द्वि०१ द्वि०२ द्वि०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

**पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।**

सर्व०१ भ०२ द्वि०३ भ०४ द्वि०५ ए०६ द्वि०७ गु०

। । । । ऽ । । ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

**यदि वचसा मनसा वा द्रुह्यति नित्यं न भूतेभ्यः (१) ॥**

पादग्रहणं यत्युपलक्षणार्थम् ॥

## (१२०) विपुलाऽन्या ॥ २३ ॥

यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये वा उभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्य्या विपुला नाम । सा चाद्यन्तोभयपूर्व्वकत्वात् त्रिधा भवति । सामान्येन विधानमेतत् । तत्रादिविपुला ।

द्वि०१ द्वि०२ द्वि०३ ज०४ द्वि०५ सर्व०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ । । । । ऽ ऽ ऽ

**स्निग्धच्छाया-लावण्य-लेपिनी किञ्चिदवनतघ्राणा ।**

---

१ यस्या उभयदले गणत्रयेषु पादसमाप्तिरस्ति इयं पथ्या नामार्या ।

मवं०१ द्वि०२ द्वि०३ म०४ द्वि०५ ए०६ द्वि०७ गु०

। । । । ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ । ऽ ऽ ऽ

**मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः (१) ॥**

अन्तविपुला ।

द्वि०१ ज०२ म०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ । ऽ । । ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

**चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः ।**

द्वि०१ ज०२ द्वि०३ मवं०४ म०५ ए०६ मवं०७ गु०

ऽ ऽ । ऽ । ऽ । । । । । । ऽ । । । । । ऽ

**नीवीविमोचनव्याजकथितजघना जघनविपुला(२)॥**

उभयविपुला ।

द्वि०१ मवं०२ म०३ ज०४ द्वि०५ ज०६ भ०७ गु०

ऽ ऽ । । । । । । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ

**या स्त्री कुचकलसनितम्बमण्डले जायते महाविपुला ।**

द्वि०१ ज०२ म०३ ज०४ भ०५ ए०६ भ०७ गु०

ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ । । । ऽ । । ऽ

**गम्भीरनाभिरनिंदोघलोचना भवति सा सुभगा (३) ॥**

१ अत्र मुखे आद्यदले 'स्निग्ध' 'छाया' 'लाभ' इति गणत्रयमतिक्रम्य लावण्य-शब्दपर्यन्तं पादो विश्राम्यति, अत इयं मुखविपुला नाम आर्या। उक्तलक्षणा मुखप्राशस्त्यवती रमणी च मुखविपुला कथ्यते।

२ यस्या जघने (चरमे) चरमदले 'नीवी' 'विमोच' 'नव्या' इति गणत्रयात् परं चतुर्थगणाद्यक्षरे जकारे पादो विश्राम्यति, अत इयं जघनविपुला नाम आर्या। उक्तलक्षणा जघनयोः पृथुत्ववती प्रशस्तजघना नारी च जघनविपुला कथ्यते।

३ यस्या उभयोर्दलयोः गणत्रयान्ते पादौ 'कुचकल' 'सनित' इत्यत्र 'गभी'

अत्रोच्यते। पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणविरोधस्तेन मिश्रीभावो नास्ति। य एवांशो विपुलया स्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति। उभयाश्रयत्वात् पथ्यालक्षणस्य विपुलायास्तत्त्वांशेनापि प्रवेशो दुर्लभः। ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वाद् विपुला भवत्येव। पथ्याचपलयोश्च विरोधाभावाद् बाध्यबाधकभावो नास्ति। तत्रायं सङ्ग्रहः।

एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः (१)।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्याणामशीतिरेव भेदाः स्युः (२)॥

---

'रनाभि' 'रतिदी' इत्यत्र च पादो न विश्राम्यति, अत इयं महाविपुला नाम आर्या। कुचादिमध्यादिलक्षणयुक्ता योषित् महाविपुला उच्यते।

१ तिस्रो विपुलास्ततश्चैता इति ख, ग, चिह्नितपुस्तकपाठः। तिस्रो विपुलास्ततश्चतस्रा इति पुस्तकान्तरपाठः।

२ अशीतिरेव विकल्पाः स्युरिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

एका पथ्या, तिस्रो विपुलाः, मिलिता एताः, चतस्रो जाताः। पुनरेताः, चपलाभेदत्रयैः प्रत्येकं विशेषिताः सत्यो द्वादशान्या आर्या जायन्ते। एताश्च सर्वा मिलित्वा षोडशार्या भवन्ति। एवं गीतिरुपगीतिरुद्गीतिरार्यागीतिश्चैताश्च पूर्वोक्तषोडशभेदैर्विभिन्नाः सत्यः प्रत्येकं षोडशषोडशप्रकारा आर्या जायन्ते। सर्वाश्चैताः पञ्चषोडशसङ्ख्यात्मिका आर्या मिलित्वा अशीतिरूपा जायन्ते। पुनरेता अशीतिरार्याः सुखबोधार्थमधोऽधः क्रमेण नामाङ्केनापि विन्यस्यन्ते। यथा,

पथ्यार्या १। आदिविपुलार्या २। अन्तविपुलार्या ३। उभयविपुलार्या ४। मुखचपलापथ्यार्या ५। मुखचपलादिविपुलार्या ६। मुखचपलान्तविपुलार्या ७। मुखचपलोभयविपुलार्या ८। जघनचपलापथ्यार्या ९। जघनचपलादिविपुलार्या १०।

तेषामनुक्तोदाहरणान्यूह्यानि ॥

जघनचपलान्त्यविपुलार्या ११। जघनचपलोभयविपुलार्या १२। महाचपलापथ्यार्या १३। महाचपलादिविपुलार्या १४। महाचपलान्त्यविपुलार्या १५। महाचपलोभयविपुलार्या १६। गीतिपथ्यार्या १७। गीत्यादिविपुलार्या १८। गीत्यन्त्यविपुलार्या १९। गीत्युभयविपुलार्या २०। मुखचपलागीतिपथ्यार्या २१। मुखचपलागीत्यादिविपुलार्या २२। मुखचपलागीत्यन्त्यविपुलार्या २३। मुखचपलागीत्युभयविपुलार्या २४। जघनचपलागीतिपथ्यार्या २५। जघनचपलागीत्यादिविपुलार्या २६। जघनचपलागीत्यन्त्यविपुलार्या २७। जघनचपलागीत्युभयविपुलार्या २८। महाचपलागीतिपथ्यार्या २९ महाचपलागीत्यादिविपुलार्या ३०। महाचपलागीत्यन्त्यविपुलार्या ३१। महाचपलागीत्युभयविपुलार्या ३२। उपगीतिपथ्यार्या ३३। उपगीत्यादिविपुलार्या ३४। उपगीत्यन्त्यविपुलार्या ३५। उपगीत्युभयविपुलार्या ३६। मुखचपलोपगीतिपथ्यार्या ३७। मुखचपलोपगीत्यादिविपुलार्या ३८। मुखचपलोपगीत्यन्त्यविपुलार्या ३९। मुखचपलोपगीत्युभयविपुलार्या ४०। जघनचपलोपगीतिपथ्यार्या ४१। जघनचपलोपगीत्यादिविपुलार्या ४२। जघनचपलोपगीत्यन्त्यविपुलार्या ४३। जघनचपलोपगीत्युभयविपुलार्या ४४। महाचपलोपगीतिपथ्यार्या ४५। महाचपलोपगीत्यादिविपुलार्या ४६। महाचपलोपगीत्यन्त्यविपुलार्या ४७। महाचपलोपगीत्युभयविपुलार्या ४८। उद्गीतिपथ्यार्या ४९। उद्गीत्यादिविपुलार्या ५०। उद्गीत्यन्त्यविपुलार्या ५१। उद्गीत्युभयविपुलार्या ५२। मुखचपलोद्गीतिपथ्यार्या ५३। मुखचपलोद्गीत्यादिविपुलार्या ५४। मुखचपलोद्गीत्यन्त्यविपुलार्या ५५। मुखचपलोद्गीत्युभयविपुलार्या ५६। जघनचपलोद्गीतिपथ्यार्या ५७। जघनचपलोद्गीत्यादिविपुलार्या ५८। जघनचपलोद्गीत्यन्त्यविपुलार्या ५९। जघनचपलोद्गीत्युभयविपुलार्या ६०। महाचपलोद्गीतिपथ्यार्या ६१। महाचपलोद्गीत्यादिविपुलार्या ६२। महाचपलोद्गीत्यन्त्यविपुलार्या ६३। महाचपलोद्गीत्युभयविपुलार्या ६४। आर्यागीतिपथ्यार्या ६५। आर्यागीत्यादिविपुलार्या ६६। आर्यागीत्यन्त्यविपुलार्या ६७। आर्यागीत्युभयविपुलार्या ६८। मुखचपलार्यागीतिपथ्यार्या ६९। मुखचपलार्यागीत्यादिविपुलार्या ७०। मुखचपलार्यागीत्यन्त्यविपुलार्या ७१। मुखचपलार्यागीत्युभयविपुलार्या ७२। जघनचपलार्यागीतिपथ्यार्या ७३। जघनचपलार्यागीत्यादिविपुलार्या ७४। जघनचपलार्यागीत्यन्त्यविपुलार्या ७५। जघनचपलार्यागीत्युभयविपुलार्या ७६। महाचपला-

## (१२१) चपला द्वितीयचतुर्थौ गमध्ये जौ (१) ॥ २४ ॥

अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरू(।ऽ।)भवतः, प्रथमश्चान्त्यगुरुः(।।ऽ), तृतीयो द्विगुरुः(ऽऽ), पञ्चमश्चादिगुरुः(ऽ।।), शेषं यथाप्राप्तं। एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सार्य्या चपला नाम। उदाहरणमग्रतः॥

## (१२२) पूर्व्वे मुखपूर्व्वा ॥ २५ ॥

पूर्व्वेऽर्द्धे चपलालक्षणञ्चेद् भवति, तदासौ मुखचपला आर्य्या (२)। पथ्यापूर्वं मुखचपलोदाहरणम्।

म० १ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ म०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ

**अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी(३)कुटिला।**

---

र्यागीतिपथ्यार्या ७७। महाचपलार्यागीत्यादिविपुलार्या ७८। महाचपलार्यागीतान्त्यविपुलार्या ७९। महाचपलार्यागीत्युभयविपुलार्या ८० इति। एतासामुदाहरणानि नामानुकूलमूह्यानि। अप्रसिद्धिहेतोर्न तानि ग्रन्थेऽस्मिन् प्रदर्शितानि। अत्र मुखजघनशब्दयोः क्रमेण पूर्वमुत्तरमर्थः। यथा शरीरस्य मुखं पूर्वं जघनञ्चोत्तरमतो वापि छन्दःशास्त्रे आर्यापूर्वोत्तरार्द्धयोर्मुखजघनत्वकल्पना। विपुलचपलशब्दयोरपि पूर्वोक्तलक्षणातिक्रमरूपोऽर्थः। यथा वैपुल्यचापल्ययोर्न नियमस्तिष्ठति नियमातिक्रम एव भवति। अतो वापि तयोः पूर्वोक्तलक्षणातिक्रमरूपार्थे व्यवहारः। आर्योदाहरणेषु तु मुखजघनादिशब्दानां पक्षे प्रकृतार्थोऽपि परिस्फुरति।

१ उभयदलयोर्मध्यगतौ जगणौ चेच्चपला लक्षणं सिद्ध्यति, एवमेवैतत्पिङ्गलच्छन्दोमञ्जरीवृत्तरत्नाकरादिषु प्रतिपादितम्। यत्तु हलायुधेन प्रथमस्यान्त्यगुरुरित्याद्युक्तं, तच्चिन्त्यम्। सर्वत्र चपलोदाहरणेषु प्रथमस्यान्त्यगुरोः पञ्चमस्यादिगुरोश्चादर्शनात्।

२ मुखचपला नामेति ख, चिह्नितपुस्तकपाठः।

३ परस्य रन्ध्रानुसारिणीति ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

द्वि०१ मध्य०२ द्वि०३ द्वि०४ द्वि०५ ए०६ मध्य०७ गु०

ऽ ऽ । । । । ऽ ऽ ऽ ऽ ऽ ऽ । । । । । ऽ

दूरात् परिहरणीया नारी नागीव मुखचपला (१) ॥

आदिविपुलापूर्व्वकं(२)मुखचपलोदाहरणम्।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

यस्याश्च लोचने(३)पिङ्गले भुवौ सङ्गते मुखं दीर्घम्।

म०१ ज०२ द्वि०३ द्वि०४ म०५ ए०६ मध्य०७ गु०

। ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । । । । । ऽ

विपुलोऽन्तनाश्च दन्ताः कान्ताऽसौ भवति मुखचपला(४) ॥

उभयविपुलापूर्व्वं (५)मुखचपलोदाहरणम्।

१ अस्या उभयोर्दलयोरपि गणेषु पादो विश्राम्यति, पुनः पूर्वार्द्धे 'वक्राहि' इति द्वितीय 'परस्य' इति चतुर्थश्च जगण, अतिदूरात् अन्त्यगुरुगणः प्रथमः, 'जिह्वा' इति ततो द्विगुरुगणः, वर्त्तते, एवमेव मुखे पूर्वार्द्धे चपलालक्षणयुक्ता भवति, अतः पथ्यापूर्विका मुखचपला नाम आर्य्येयम्। 'मुखे' आस्ये, चापल्यवती उक्तलक्षणा नारी च मुखचपला नाम्नेत्यपरोऽर्थः।

२ विपुलापूर्व्वकमिति क, चिह्नितपुस्तकपाठः।

३ यस्या विलोचने इति क, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ अस्या मुखे पूर्वार्द्धे आदिविपुलावत् 'मेपि' इति तृतीयगणान्ते पादो न विश्राम्यति, अथ द्वितीयार्द्धे तु 'दन्ताः' इति तृतीयगणान्ते पादः पथ्यावत् विश्राम्यति, द्वितीयचतुर्थौ च जगणौ स्तः, अत इयमादिविपुलापूर्विका मुखचपलानाम्नी। पिङ्गललोचनादिलक्षणमन्यत्रा मुखे वाक्चापल्यवती नारी च मुखचपलेत्युच्यते।

५ उभयविपुलापूर्व्वकमिति क, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

विपुलाभिजातवंशोद्भवापि रूपातिरेकरम्यापि ।

द्वि०१ ज०२ द्वि०३ ज०४ सर्व०५ ए०६ सर्व०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । । । । । । । । । ऽ

निःसार्य्यते गृहाद्दल्लभापि यदि भवति मुखचपला (१) ॥

(१२६) जघनपूर्व्वेतरत्र ॥ २६ ॥

द्वितीयेऽर्द्धे चपलालक्षणञ्चेद् भवति, सा आर्य्या जघनचपला नाम ।

तत्र पथ्यापूर्व्वकं जघनचपलोदाहरणम् ।

द्वि०१ भ०२ द्वि०३ भ०४ म०५ ज०६ द्वि०७ गु०

ऽ ऽ ऽ । । ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ

यत्पादस्य कनिष्ठा, न स्पृशति महीमनामिका वापि ।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ सर्व०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । । । ऽ

सा सर्वधूर्त्तभोग्या, भवेदवश्यं जघनचपला (२) ॥

अन्तविपुलापूर्व्वकं जघनचपलोदाहरणम् ।

---

१ अस्या उभयदले गणत्रयान्ते पादो न विश्राम्यति, पुनः द्वितीयचतुर्थौ जगणौ, प्रथमो मगणः, तृतीयो द्विगुरुः वर्त्तते, अत इयमुभयविपुलापूर्व्विका मुखचपला नाम आर्या । उक्तलक्षणा मुखे आस्ये वाक्चापल्यवती च नारी मुखचपलेत्युच्यते ।

२ अस्याः पूर्वार्द्धे 'यत्पा' 'दस्यक' 'निष्ठा' इति गणत्रयान्ते पादः समाप्यते, 'जघने' उत्तरार्द्धे द्वितीयः चतुर्थश्च जगणौ वर्त्तेते, अत इयं पथ्यापूर्व्विका जघनचपलानामार्या बोध्या । एतदार्य्योक्तलक्षणा जघनयोश्चापल्यवती नारी च जघनचपलेत्युच्यते ।

द्वि॰१ द्वि॰२ द्वि॰३ ज॰४ द्वि॰५ ज॰६ द्वि॰७ गु॰

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ । । ऽ । ऽ ऽ ऽ

यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा।

स॰१ ज॰२ द्वि॰३ ज॰४ भ॰५ ल॰६ स॰७ गु॰

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । । ऽ ऽ

विपुले कुले प्रसूतापि सा ध्रुवं जघनचपला स्यात् (१)॥

महाविपुलापूर्व्विका जघनचपलोदाहरणम्।

स॰१ स॰२ स॰३ ज॰४ भ॰५ ज॰६ द्वि॰७ गु॰

। । ऽ । । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ ऽ

मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः।

स॰१ ज॰२ द्वि॰३ ज॰४ भ॰५ ल॰६ स॰७ गु॰

। । ऽ । । ऽ । ऽ ऽ । ऽ । ऽ । । । । ऽ ऽ

विपुलान्वयाभिजातापि जायते जघनचपलासौ (२)॥

---

१ यस्या अन्ते उत्तरार्द्धे तु विपुलावत् गणत्रयान्ते पादो न विश्राम्यति, अपितु चतुर्थगणस्याद्यक्षरे 'पि'कारे। पुनः 'जघने' उत्तरार्द्धे, चपलावत् सगणः (॥ऽ) प्रथम-, द्वितीय-, चतुर्थेषु, जगणः, द्विगुरुस्तृतीये, आदिगुरुर्भगणः पञ्चमो वर्त्तते, अत इयमन्त्यविपुलापूर्विका जघनचपलाख्या परिज्ञेया। उक्तलक्षणा नारी च जघनचपलोच्यते। सुखबोधार्थं कतिपयानामार्य्याणां गणविभागप्रदर्शनं विस्तरेण वाञ्छितं, ग्रन्थबाहुल्यभयादितः परं न कस्यचिद्दर्शयामि।

२ यस्या महाविपुलावत् उभयोर्दलयोरपि गणत्रयेषु पादो न विश्राम्यति, पुनः 'जघने' उत्तरार्द्धे, चपलावत् सगणः प्रथमः, जगणौ द्वितीयचतुर्थौ, द्विगुरुः तृतीयः, पञ्चमो भगणः, अत इयं महाविपुलापूर्विका जघनचपला नामार्या ज्ञेया। उक्तलक्षणा

(१२४) उभयोर्महाचपला ॥ ३७ ॥

यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या महाचपला नाम। तत्र पथ्यापूर्व्विकं महाचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

हृदयं हरन्ति नार्य्या मुनेरपि भ्रूकटाक्षविक्षेपैः।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

दोर्मूलनाभिदेशं निदर्शयन्त्यो महाचपलाः (१)॥

विपुलापूर्व्विकं महाचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

चिवुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः।

---

कामिनी च जघनचपलोच्यते। मकरध्वजस्य सद्मनि भवति स्फुटतिलकलाञ्छनं यस्या इति क, चिह्नितपुस्तकपाठः। परन्त्वेतादृशपाठे महाविपुलालक्षणं न घटते। अत्र तु सप्तमीत्यत्र गणत्रयान्ते पादविरामो जायते, वस्तुतस्तु नैष आवश्यकः। उत्तरार्द्ध-प्रथमे विपुलान्ववायजातापि इति, विपुलान्वयजातापि इति, विपुले कुले प्रजातापीति च पुस्तकत्रयपाठः।

१ यस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विश्राम्यति, पुनश्च चपलावत् गणभागौ जगणौ द्वितीयचतुर्थौ, द्विगुरुस्तृतीयौ वर्त्तते, अत इयं पथ्यापूर्व्विका महाचपला नामार्य्या। एतदार्य्योक्तलक्षणा महाचापल्यविशिष्टा सुन्दरी च महाचपलोच्यते।

स०१ ज०२ द्वि३ ज०४ द्वि०५ ए०६ज०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

विपुलान्वयप्रसूतापि जायते सा महाचपला (१) ॥

(१२५) आद्यर्द्धसमा गीतिः ॥२८॥

आद्येनार्द्धेन समसंख्यं यस्याः (२) सा आद्यर्द्धसमा, मध्यपद-लोपी समासः (३)। एतदुक्तं भवति द्वितीयेऽप्यर्द्धे षष्ठो गणो जकारो न्लौ वा कर्त्तव्यः। तत्र पथ्यागीत्युदाहरणम्।

म०१ द्वि०२ म०३ म०४ म०५ ज०६ द्वि०७ गु०

। । ऽ ऽ ऽ । । ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ

मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।

द्वि०१ म०२ द्वि०३ म०४ म०५ ज०६ म०७ गु०

ऽ ऽ ऽ । । ऽ ऽ । । ऽ । । ऽ । ऽ । ऽ । । ऽ

गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति(४) ॥

आदिविपुलागीत्युदाहरणम् ।

---

१ यस्या विपुलावदुभयत्र गणत्रयान्ते पादो न विरामयति, पुनश्च महाचपला-वत् गणयुग्मौ जगणौ द्वितीयचतुर्थौ, द्विगुरुस्तृतीयः, वर्णौ ते, चेत् एवं विपुला-पूर्विका महाचपला नामार्या वेदितव्या। उभयचपला महाचपलावती च यार्या महाचपलेत्युच्यते।

२ आद्यर्द्धेन समसंख्यमपरार्द्धं यस्या इति क, ख, चिह्नितपुस्तकपाठः। आद्येन समसंख्यमपरार्द्धं यस्याः, आद्यार्द्धेन समसंख्यं यस्या इति च पुस्तकान्तरपाठः।

३ मध्यमपदलोपी समास इति क, ख, चिह्नितपुस्तकपाठः।

४ पौरवधूनां हृत्सु कुसुमायुधं प्रबोधयतीति क, ख, चिह्नितपुस्तकपाठः। यस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विरामयति, पुनरस्या उभयार्द्धे षष्ठगणश्चतुर्लघुः

सर्व० १　भ० २　द्वि० ३　ज० ४　द्वि० ५　ज० ६　स० ७　गु०

| | | | S | | S S | S | S S | S | | | S S

इयमपरा विपुलागीतिरुच्यते सर्व्वलोकहितहेतोः।

स० १　ज० २　द्वि० ३　ज० ४　स० ५　ज० ६　द्वि० ७　गु०

| | S | S | S S | S | | | S | S | S S S

यदनिष्टमात्मनस्तत्परेषु भवतापि मा क्वचित् कारि (१)॥

पथ्यामहाचपलागीत्युदाहरणम्।

द्वि० १　ज० २　द्वि० ३　ज० ४　द्वि० ५　ज० ६　स० ७　गु०

S S | S | S S | S | S S | S | | | S S

कामश्चकास्ति गीतिर्म्मृगीदृशां सीधुपान-चपलानाम्।

स० १　ज० २　द्वि० ३　ज० ४　द्वि० ५　सर्व० ६　स० ७　गु०

| | S | S | S S | S | S S | | | | | | S S

सुरतञ्च मुक्तलज्जं निरर्गलालापमणितरमणीयम् (२)॥

महाचपलामहाविपुलागीत्युदाहरणम्।

---

समाप्ते वर्त्तते, अत इयमार्य्याप्रथमार्द्धलक्षणवती पथ्यापूर्व्विका गीतिर्नामार्य्या ज्ञातव्या। चपलामालायाश्च गीतिरुच्यते।

१ यस्या विपुलायाम् पूर्व्वार्द्धे गणत्रयेषु पादो न विश्राम्यति, उत्तरार्द्धे तथ विश्राम्यति. पुनरुभे दले षष्ठजगणवत्वात्तुमाने वर्त्तेते, अत इयमाद्यविपुलापूर्व्विकार्य्याप्रथमार्द्धलक्षणवती गीतिर्नामार्य्या। विपुलोद्भेषाच्च विपुला गीतिरुच्यते।

२ निरर्गलोल्लापभणितरमणीयमिति पुस्तकान्तरपाठः। निरर्गलालापभणितरमणीयमिति ख. चिह्नितपुस्तकपाठः। निरर्गलोल्लापमणितरमणीयमिति ग, चिह्नितपुस्तकपाठः। यस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विश्राम्यति, पुनः

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ सर्व०६ सर्व०७ गु०

पञ्चेषुवल्लभः पञ्चमध्वनिस्तत्र भवति यदि विपुलः।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः (१)॥

(१२६) अन्त्येनोपगीतिः॥२९॥

अन्त्येनार्द्धेन समसाद्यमर्द्धं यस्याः, सा आर्य्या उपगीतिर्नाम।

तत्र पथ्योपगीत्युदाहरणम्।

द्वि०१ स०२ स०३ द्वि०४ द्वि०५ ष०६स०७ गु०

गान्धर्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि।

प्रथमेर्द्धे षष्ठो जगणः, द्वितीयेर्द्धे षष्ठो नलघुरूपः सर्वलघुर्भवति. महाचपलावत् उभयत्र द्वितीयतुर्यौ गमध्यौ जौ, तृतीयो द्विगुरुश्च, वर्णितः, अत इयं पथ्यामहाचपला-पूर्विका गीतिर्नामार्या।

१ यथा महाचपलावत् दलद्वये द्वितीयतुर्यौ गमध्यगौ जौ, तृतीयो द्विगुरुश्चापि, पुनरुभयार्द्धे महाविपुलावत गणत्रयान्ते पादो न विश्राम्यति, प्रथमार्द्धे पुनः षष्ठो नलघुरूपः सर्वलघुर्न द्वितीयार्द्धे षष्ठो जगणो वर्णितः, अत इयं महाचपला-महाविपुलापूर्विका गीतिर्नामार्या। वृत्तायुधमते गीतिलक्षणे षष्ठो जगणो नलघु-रूपेण सर्वेण विकल्प्यते, अत एतदुदाहरणद्वये प्रथमार्द्धे द्वितीयार्द्धे च षष्ठो नलघुरूपो गणो दृश्यते।

सर्व०१ भ०२ भ०३ स०४ द्वि०५ ए०६द्वि०७ गु०

। । । । ऽ । । ऽ । । । । ऽ ऽ ऽ । ऽ ऽ ऽ

इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते देशः(१) ॥

महाविपुलोपगीत्युदाहरणम्(२) ।

स० १ ज०२ द्वि०३ सर्व०४ भ०५ ए०६द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । । । । । ऽ । । । ऽ ऽ ऽ

विपुलोपगीतिझङ्कारमुखरिते भ्रमरमालानाम् ।

द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६द्वि०७गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ ऽ ऽ

रेवातपोवने वस्तुतोऽस्तु सततं मम प्रीतिः (३) ॥

पथ्यामहाचपलोपगीत्युदाहरणम् ।

स० १ ज० २ द्वि०३ ज०४ द्वि०५ ए०६भ०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

विषयामिषाभिलाषं करोति चित्तं सदा चपलम् ।

---

१ यस्या गणत्रयेषु पादो पथ्यावद् विश्राम्यति, पुनरार्याषष्ठैकलघुगणवदन्त्यार्द्धसमसंहृदयमव वर्त्तते, अत इयमार्यान्त्यदलविन्यासवती पथ्यापूर्व्विकोपगीतिर्नामार्या। विपरीतभावगर्भनामकोपगीतिरुच्यते।

२ पथ्याविपुलोपगीतित्युदाहरणमिति क, चिह्नितपुस्तकपाठो न सङ्गतः।

३ वस्तुमस्तु सततं चि मे प्रीतिरिति ख, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च। यस्या उभयदलयोरपि त्रयेषु पादो न विश्राम्यति पुनः षष्ठैकलघुगणवदार्याद्वितीयदलवद्दलद्वयं सर्वं वर्त्तते, अत इयं नामानुरूपलक्षणद्वया महाविपुलापूर्व्विकोपगीतिर्नामार्या। प्रचुरत्वाच्च विपुलोपगीतिः कथ्यते।

द्वि० १ अ० २ द्वि० ३ अ० ४ द्वि० ५ ए०(द्वि०) गु०

वैराग्यभावनानां तथोपगीत्या भवेत् स्वस्थम् (१) ॥

महाचपला महाविपुलोपगीत्युदाहरणम् (२)।

म० १ अ० २ द्वि० ३ अ० ४ म० ५ ए०(द्वि०) गु०

विपुलोपगीति सन्त्यज्यतामिदं स्वरचकं भिक्षो (३)।

म० १ अ० २ द्वि० ३ अ० ४ द्वि० ५ ए०(द्वि०) गु०

विषयाभिलाषदोषेण बाध्यते चञ्चलं चित्तम् (४) ॥

(१०१) उत्क्रमेणोद्गीतिः ॥ ३० ॥

पूर्व्वोक्तात् क्रमाद् विपरीतक्रम उत्क्रमः। अयमर्थः, आद्य-

१ अस्या उभयत्र गणत्रयेण पादौ विश्राम्यतः, पुनः षष्ठैकलघुगणवद्दार्थे द्वितीयदलवद्दलद्वयमपि, द्वितीयतुर्य्यौ गणमध्यौ जौ, उभयत्र द्विगुरुः तृतीयः, वर्त्तते, अत इयं नामानुरूपलक्षणयाक्रान्ता पथ्यामहाचपलापूर्व्विकोपगीतिर्नामार्य्या।

२ महाविपुलामहाचपलोपगीत्युदाहरणमिति ख, ग, चिह्नितपुस्तकपाठः।

३ इद स्थानक भिक्षो इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ बध्यते चञ्चल चेत इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च। अस्याउभयार्द्धे प्रथमः मगणः, द्वितीयचतुर्थौ जगणौ, तृतीयो द्विगुरुः, महाविपुलावत् पुनरुभयत्र गणत्रयान्ते पादौ न विश्राम्यतः, उपगीतिवत् षष्ठैकलघुगणवद्दार्थान्तरदलद्वय च वर्त्तते, अत इयं नामयथानुरूपलक्षणाक्रान्ता महाचपलामहाविपुलापूर्व्विकोपगीतिर्नामार्य्या।

मन्त्यं (१) भवत्यर्द्धमन्त्यमादौ, सा उद्गीतिर्नामार्य्या। तत्र पथ्योद्गीत्युदाहरणम्।

भ०१ द्वि०२ स०३ स०४ द्वि०५ ए०६ भ०७ गु०

ऽ । । ऽ ऽ । । ऽ । । ऽ ऽ ऽ । ऽ । । ऽ

व्याध इवोद्गीतिरवैः प्रथमं तावन्मनो हरसि।

भ०१ स०२ भ०३ द्वि०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ । । । । ऽ ऽ । । ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ ऽ

दुर्नयकर विश्राम्यसि पश्चात् प्राणेषु विप्रियैः शल्यैः (२) ॥

महाविपुलोद्गीत्युदाहरणम्।

द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६ भ०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । । ऽ

एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति (३)।

द्वि०१ ज०२ द्वि ३ सर्व०४ द्वि०५ ज०६ स०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । । । । ऽ ऽ । ऽ । । । ऽ ऽ

त्वद्वल्लभापि यत् कीर्त्तिरखिलदिक्पालपार्श्वमुपयाति (४)॥

पथ्यामहाचपलोद्गीत्युदाहरणम्।

---

१ आद्यमर्द्धं इति ख, ग, चिह्नितपुस्तकपाठः।

२ विप्रियैः सर्वैरिति ग, चिह्नितपुस्तकपाठः। अस्याः पथ्यावदुभयत्र गणत्रये पादो विश्राम्यति, पुनः षष्ठैकलघुगणवदार्य्याया अन्त्यमर्द्धमत्रादौ, षष्ठजगणवदाद्यमर्द्धं चान्ते वर्त्तते, अत इयं पथ्यापूर्विकोद्गीतिर्नामार्य्या।

३ उद्गीतिः सर्वत्र परिभ्रमतीतिपाठः क, चिह्नितपुस्तकेऽस्ति। परन्तु एतादृशपाठे उद्गीतिलक्षणसम्बन्धो न भवति। प्रथमार्द्धे षष्ठैकलघुगणस्यालाभात्।

४ अस्या उभयदले महाविपुलावद्गणत्रये पादो न विश्राम्यति, पुनरार्य्यायाः षष्ठ-

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ स०७ गु०

S S I S I S S I S I S S I I I S S

उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम्।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

S S I S I S S I S I S S I S I S S S

तस्मान्मुने विमुञ्च प्रदेशमेनं समेतमेताभिः(१)॥

महाविपुलामहाचपलोद्गीत्युदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

I I S I S I S S I S I S S I S I I S

विपुला पयोधरश्रोणिमण्डले चक्षुषोश्चपला।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ भ०७ गु०

S S I S I S S I S I S S I S I S I I S

उद्गीतिशालिनी कामिनी च सा वालिनी मनो हरति(२)॥

---

लघुगणवद् द्वितीयार्द्धमाद्यं, षष्ठजगणवत् प्रथमार्द्धमन्त्यं वर्त्तते, अत इयं सम-लक्षणाक्रान्ता महाविपुलापूर्विकोद्गीतिर्नामार्या। महत्युद्घोषणा च विपुलोद्गीति-रुच्यते।

१ प्रदेशमेनं समेतमेताभिरिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। अस्याः पथ्यावद् दलद्वये त्रिषु गणेषु पादो विश्राम्यति, पुनरुभयार्द्धे महाचपलावद् द्वितीयचतुर्थौ जगणौ गुरुमध्यगनौ स्तः, द्विगुरुश्च तृतीयो वर्त्तते, पुनरुद्गीति-वदार्योभयार्द्धे विपरीते वर्त्तेते, अत इयं समलक्षणाक्रान्ता पथ्यामहाचपला-पूर्विकोद्गीतिर्नामार्या।

२ चारिणी मनो हरतीति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। अस्या दलद्वये महाविपुलावद्गणत्रये पादो न विश्राम्यति, पुनर्महाचपलावदुभयार्द्धे

## (१२८) अर्द्धे वसुगण आर्य्यागीतिः ॥ ३१ ॥

अष्टगणे प्रथमार्द्धे, सा (१) आर्य्यागीतिर्नामार्य्या । अष्टमोऽपि गणश्चतुर्मात्रको(२) भवतीत्यर्थः । विशेषाभावाद्द्वितीयमप्यर्द्धं तादृशमेव । अत्रापि षष्ठो गणो द्विविकल्प एव नलकारः । अर्द्ध इति वर्त्तमाने पुनरर्द्धग्रहणाद् गणग्रहणाच्च इयमपि पथ्यादिलक्षणपूर्व्विका आर्य्यागीतिः । पथ्यार्य्यागीत्युदाहरणम् ।

सर्व०१ सर्व०२ द्वि०३ द्वि०४ द्वि०५ ज०६ द्वि०७ स०८

। । । । । । । । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ । । ऽ

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्मपरम् ।

द्वि०१ द्वि०२ स०३ स०४ द्वि०५ ज०६ द्वि०७ द्वि०८

ऽ ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ

आत्मानं भावयतो भवमुक्तिः स्यादितीयमार्य्यागीतिः (३)॥

महाविपुलार्य्यागीत्युदाहरणम् ।

---

द्वितीयचतुर्थौ गुरुमध्यगतौ जगणौ, द्विगुरुश्च तृतीयोऽस्ति, पुनरुद्गीतिवदार्य्योभयार्द्धे विपरीते वर्त्तेते, अत इयं महाविपुलामहाचपलापूर्व्विकोद्गीतिर्नामार्य्या ।

१ अष्टगणाः प्रथमार्द्धे यस्या भवन्ति सा इति ग, चिह्नितपुस्तकपाठः ।

२ चतुर्मात्रिक इति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च । चतुर्मात्रिक एव इति ग, चिह्नितपुस्तकपाठः ।

३ अस्याः पथ्यावत् त्रिषु गणेषु पादो विश्राम्यति, पुनरुभयदलयोरष्टगणाः सन्ति । षष्ठश्च जगणो वर्त्तते, अत इयं पथ्यापूर्व्विकार्य्यागीतिर्नामार्य्या । आर्य्यजनानामाशमन्ताद्गीतिरार्य्यागीतिः कथ्यते ।

स०१ ज०२ स०३ ज०४

I I S I S I I I S I S I

विषयाभिलाषमृगतृष्णिका प्र

भ०५ सर्व०६ सर्व०७ स०८

S I I I I I I I I I I I I I S

वं हरति हरिणमिव हतहृदयम्।

स०१ ज०२ स०३ ज०४

I I S I S I I I S I S I

विपुलात्ममोक्षसुखकाङ्क्षिभिस्त-

द्वि०५ ज०६ सर्व०७ द्वि०८

S S I S I I I I I S S

तस्त्यज्यते विषयरससङ्गः (१) ॥

पथ्याजघनचपलार्य्यागीत्युदाहरणम्।

द्वि०१ ज०२ द्वि०३ म०४ द्वि०५ सर्व०६ म०७ स०८

S S I S I S S I I S S S I I I I I I S I I S

वाताहतोर्म्मिमालाचपलं सम्प्रेक्ष्य विषयसुखमल्पतरम्।

---

१ विपुलात्मभिस्ततो मोक्षकाङ्क्षिभिस्त्यज्यते विषयसुखसङ्ग इति ग, चिह्नित-पुस्तकपाठः। अस्या महाविपुलावद्दलद्वये त्रिषु गणेषु पादो न विश्राम्यति, पुनरुभयदलयोरष्टमगणाः सन्ति। षष्ठो गणः सर्वलघुर्मध्यगुरुश्च वर्त्तते। अत इयं महाविपुलापूर्विकार्यागीतिर्नामार्या।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ स०८

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ

मुक्ता समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः (१) ॥

महाविपुलामहाचपलार्य्यागीत्युदाहरणम् ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ

चपलानि चक्षुरादीनि चित्तहारी

ज०६ सर्व०७ स०८

। ऽ । । । । । । । । ऽ

च हन्त हतविषयगणः ।

द्वि०१ ज०२ द्वि०३ ज०४ भ० ५

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ।

एकान्तशीलिनां (२) योगिनामतोभव

सर्व०६ स०७ द्वि०८

। । । । । । । ऽ ऽ ऽ

ति परमसुखसम्प्राप्तिः (३) ॥

इत्यार्य्याधिकारः ॥

१ अत्र पथ्यार्य्यागीत्योर्लक्षणसमन्वयोऽस्ति, पुनः, जघनचपलावत्परमेऽर्द्धे द्वितीय-चतुर्थौ गुरुमध्यगतौ जगणौ, द्विगुरुश्च तृतीयोऽस्ति। अत इयं पथ्याजघनचपला-पूर्व्विकार्य्यागीतिर्नामार्या।

२ एकान्तशालिनामिति च, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

३ अत्र महाविपुलावद्दलद्वये पादो न विश्राम्यति। पुनरुभयदलयोरष्टमगणः,

(अथवैतालीयाधिकारः।)

(१२८)वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्गाः॥३२॥

ल इत्यनुवर्त्तते। यत्र 'अयुक्पादे' प्रथमे तृतीये च, 'द्विःस्वराः' चतुर्दशलकारा भवन्ति, 'युक्पादे च द्वितीये चतुर्थे च, 'युग्वसवः' षोडशलकाराः, तद् वैतालीयं नाम च्छन्दः। तेषां लां मध्ये उभयोरपि (१) पादयोरन्ते रेफलकारगकाराः कर्त्तव्याः। आद्ये पादे षड्लकाराः पश्चादवशिष्यन्ते, द्वितीये चाष्टौ। एवं वैतालीयार्द्धं सिद्ध्यति। द्वितीयमप्यर्द्धं तादृशमेव। तत्रोदाहरणम्।

रगणः ल० गु०

१।२ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३।४ ५।६ ७
क्षुत् क्षो ण श री र स ञ्च या व्य क्तो भू त-

रगणः ल० गु०

८ ९।१० ११ १२।१३ १४ १५।१६
शि रा ऽस्थि प ञ्ज राः।

तत्र षष्ठो गणो मध्यगुरुः सर्वलघुश्च वर्त्तते, पुनर्दलद्वये महाचपलावत् द्वितीयचतुर्थौ जगणौ, गुरुमध्यगतौ, द्विगुरुश्च तृतीयोऽस्ति। अत इयं महाविपुला-महाचपलापूर्विकार्यागीतिर्नामार्या।

१ द्वयोरपीति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

रगणः लं० गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३।४ ५।६ ७

के शै: प रु षै स्त वा र यो वै ता ली यं

रगणः लं० गु०

८ ९।१० ११ १२।१३ १४ १५ १६

त नुं वि त न्व ते (१)॥

अपिच ।

तव तन्वि कटाक्षवीचितैः प्रहरद्भिः (२)श्रवणान्तगोचरैः ।

विशिखैरिव तीक्ष्णकोटिभिः प्रहतः प्राणिति दुष्करं गतः(३)॥

अपिच ।

शवशोणितपङ्कराञ्जितं (४) पुरुषान्त्रग्रथितोर्द्ध्वमूर्द्धजम् ।

---

१ अस्य प्रथमतृतीययोः पादयोश्चतुर्दशमात्राः, द्वितीयचतुर्थयोः षोडशमात्राः सन्ति, पुनरयुक्पादे षष्ठ्याः, युक्पादे अष्टम्याश्च मात्रायाः परतः क्रमेण रगणो लघुर्गुरुश्च पतितोऽस्ति। पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योश्च मात्रयोरेकस्मिन् गुर्व्वक्षरेऽवस्थितिर्नास्ति। युक्पादे षष्ठीसप्तम्योश्च मात्रयोर्नैकत्रावस्थितिर्वर्त्तते। अत इयं वैतालीयन्नाम च्छन्दो बोध्यम् ।

२ प्रचरद्भिरिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। प्रसरद्भिरिति ग, चिह्नितपुस्तकपाठः ।

३ दुष्कृतं नर इति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च ।

४ पञ्चरार्च्चितमिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। पङ्कचर्च्चितमिति ग, चिह्नितपुस्तकपाठः ।

वपुरन्तरवन्हिदीपितं (१) वैतालीयमिदं विलोक्यताम् (२)॥

वैतालीयमिति वैतालशब्दात् कृशाश्वादेराकृतिगणत्वाच्छण्-प्रत्ययश्चातुरर्थिकः। अत्र पादग्रहणमिदं ज्ञापयति, यदार्य्यादीनां (३) पादश्चतुर्भाग इति व्यवस्था नास्ति॥

## (१३०) गौपच्छन्दसकम्॥ ३३॥

अस्मिन् वैतालीये (४) छन्दस्यन्ते गकारश्चेद् अधिको भवति, तद्गौपच्छन्दसकं (५) नाम च्छन्दः। तत्रोदाहरणम्।

रगणः ल० गु० गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३ १४ १५।१६ १।२ ३।४ ५।६

वा क्यै र्म धु रैः प्र ता र्य्य पू र्वं यः प श्चा-

रगणः ल० गु० गु०

७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

द भि स न्द धा ति मि त्रम्।

---

१ वपुरातपवह्निदीपितमिति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ तव तन्वीत्याद्युदाहरणद्वयमपि वैतालीयलक्षणाक्रान्तमेव। केवलमत्र पादमुखस्थितमात्राविन्यासभेदो वर्त्तते।

३ आर्यायामिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

४ तस्मिन्नेव वैतालीये इति ख, ग चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

५ औपच्छन्दसिकमिति सर्वत्र ग, चिह्नितपुस्तके पाठः।

रगणः लु० गु० गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६ १।२ ३।४

तं दु ष्ट म तिं वि शि ष्ट गो ष्ठ्या मौ प-

रगणः लु० गु० गु०

५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

च्छ न्द स कं व द न्ति वा ह्यम् (१)॥

अपि च।

परमर्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम्।
अनवस्थितमर्थलुब्धमारादौपच्छन्दसकं जहीहि मित्रम्(२)॥

उपच्छन्दःशब्दादर्हणादिपाठाच्चातुरर्थिको वुञ्प्रत्ययः॥

(१३२) आपातलिका भ्गौ ग्॥ ३४॥

रेफलकारगकाराणामपवादः। द्विःस्वरा अयुक्पादे, युग्वसवोऽन्ते, इत्यनुवर्त्तते। पूर्वलक्षणयोरन्ते भकारो गकारद्वयञ्च (३) भवतः, तद्वैतालीयमापातलिकानाम लभते। तत्रोदाहरणम्।

---

१ अस्य प्रथमतृतीययोः पादयोः षोडशमात्राः, द्वितीयचतुर्थयोरष्टादशमात्राः सन्ति। पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः, युक्पादे षष्ठीसप्तम्योश्च मात्रयोरेकस्मिन् गुर्वक्षरे अवस्थितिर्नास्ति, पुनः षष्ठ्यष्टमीमात्राभ्यां परतः क्रमेण षट्स्वक्षरेषु रगणो लघुर्गुरुर्गुरुश्च पतितोऽस्ति, अत इदं वैतालीयपूर्वकमौपच्छन्दसकं नाम च्छन्दो बोध्यम्।

२ अत्र पादमुखगानां षडष्टमात्राणां पूर्वोदाहरणतो विन्यासप्रभेदादिदमपरप्रकारकमौपच्छन्दसकोदाहरणं ज्ञातव्यम्।

३ भकारो गकारौ चेति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

भगणः गु० गु०

१।२ ३ ४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १।२ ३।४ ५।६
पि ङ्ग ल के शो क पि ला क्षी वा चा टा

भगणः गु० गु०

७ ८ ९।१० ११ १२ १३।१४ १५।१६
वि क टो न्न त द न्ती।

भगणः गु० गु०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १ २ ३
आ पा त लि का पु न रे षा नृ प ति

भगणः गु० गु०

४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
कु ले ऽपि न भा ग्य मु पै ति (१) ॥

आपातलिका अस्थिरा इत्यर्थः ॥

## (१२२) शेषे परेण युङ् न साकम् ॥ ३५ ॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्व्यतिरिक्तो यो लकारवर्गः, सः 'शेषः,' तस्मिन् नियमः क्रियते, 'युग्' लकारः 'परेण साकं न', मिश्रीकार्य्यः, द्वितीयस्तृतीयेन,

१ अस्य प्रथमतृतीययोः पादयोश्चतुर्दशमात्राः, द्वितीयचतुर्थयोः, षोडशमात्राः सन्ति, पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः, युक्पादे षष्ठीसप्तम्योश्च मात्रयोरेकस्मिन् गुर्वक्षरेस्थितिर्नास्ति, पुनः षष्ठाष्टममात्राभ्यां परतः क्रमेण पञ्चस्वक्षरेषु भगणो गुरुगुरुश्च पतितोस्ति, अत इदं वैतालीयपूर्वकमापातलिकानामकं छन्दो ज्ञेयम्।

चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः। तत्रोदाहरणं पूर्वमेव[१]॥

([१३१]) षट् चामिश्रा युजि ॥ ३६ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षड् लकारा अमिश्रा न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्।

समरशिरसि सज्जते द्विषां नवनिशितायुधवृष्टिरग्रतः।
कुवलयदलदीर्घचक्षुषां प्रमदानां न कटाक्षवीक्षितम् ॥

औपच्छन्दसकोदाहरणम्।

परयुवतिषु पुत्रभावमादौ कृत्वा प्रार्थयते[२] पुनः पतित्वम्।
इदमपरमिहोच्यते विशेषादौपच्छन्दसकं खलस्य वृत्तम् ॥

आपातलिकोदाहरणम्।

अभिरमयति किन्नरकण्ठी हंसगतिः श्रवणायतनेत्रा। विशदकमलकोमलगात्री[३] युवतिरियं हृदयं तरुणानाम्[४] ॥

---

१ अत्रोदाहरणं पूर्वोक्तमिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ प्रार्थयते इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

३ विसकिसलयकोमलगात्रीति पुस्तकान्तरपाठः।

४ समरशिरसि, परयुवतिषु, इदमपरमित्युदाहरणत्रयं वैतालीयादिस्वस्वलक्षणाक्रान्तमेव। केवलमत्रायुक्पादमुखवर्त्तिन्यः षण्मात्राः पृथक् पृथक् प्रयुक्ताः सन्ति, युक्पादे तु तथात्वेऽतावान् पूर्वतोऽत्र विशेषः।

(१२४) **पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥ ३७ ॥**

इदानीं विशेषलक्षणमाह। शेषे परेण युङ् न साक-मित्यनेन(१) पञ्चमचतुर्थयोरेकीभावो निषिद्धः। सोऽनेन विधीयते। युजीत्यनुवर्त्तते। यदा युक्पादे 'पञ्चमेन' लकारेण, 'पूर्व्वः', सङ्गच्छते, तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति। शेषं यथाप्राप्तम्। तत्रोदाहरणम्।

रगणः ल० गु०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३

वि पु ला र्थ सु वा च का च राः क स्य

रगणः ल० गु०

४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

ना म न ह र न्ति मा न सम्।

रगणः ल० गु०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३ ४।५

र स भा व वि शे ष पे श लाः प्रा च्य वृ-

रगणः ल० गु०

६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

त्ति क वि का व्य स म्प दः (२)॥

---

१ साकमित्यमेति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ अत्र युक्पादे चतुर्थपञ्चममात्रयोरेकत्रावस्थितिरस्ति, एतावानेव वैतालीयलक्षणतोऽत्र विशेषः।

## (१३५) अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३८ ॥

पूर्व्वः साकमित्यनुवर्त्तते । 'अयुक्पादे' 'तृतीयेन' लकारेण यदि पूर्व्वः सङ्गच्छते, तदा उदीच्यवृत्तिर्नाम वैतालीयं । शेषं यथाप्राप्तमेव । तत्रोदाहरणम् ।

रगणः ल० गु०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १ २

अ वा च क म नू र्जि ता च रं श्रु ति-

रगणः ल० गु०

३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

दु ष्टं श्रु ति क ष्ट म क्र मम् (१) ।

रगणः ल० गु०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १ २

प्र सा द र ह्वि त च्च ने ष्य ते क वि-

रगणः ल० गु०

३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

भिः का व्य मु दी च्य वृ त्ति भिः (२) ॥

---

१ यतिकष्टमक्रममिति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च ।

२ अत्र वैतालीयलक्षणं यथाश्रुतं घटते । पुनरयुक्पादे द्वितीयतृतीयमात्रयो-रेकस्मिन् गुर्व्वक्षरेवस्थितिवर्त्तते । अत इदमुदीच्यवृत्ति नाम वैतालीयं छन्दो बोध्यम् ।

## (१३६) आभ्यां युगपत् प्रवृत्तकम् ॥ ३९ ॥

'आभ्यां' पूर्व्वोक्तलक्षणाभ्यां, 'युगपत्प्रवृत्ताभ्यां, प्रवृत्तकं नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्वः सङ्गच्छते(१), अयुक्पादे तृतीयेन द्वितीय इत्यर्थः। अत्रोदाहरणम् (२)।

रगणः लं० गु०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३ ४।५

इ दं भ र त व ंश भू भृ तां(३) श्रू य तां

रगणः लं० गु०

६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

श्रु ति म नो र सा य नम्।

रगणः लं० गु०

१ २।३ ४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १।२ ३

प वि त्र म धि कं शु भो द यं व्या स-

रगणः लं० गु०

४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

व क्त्र क थि तं प्र वृ त्त कम्(४)॥

१ पूर्वः संयुज्यते इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ तत्रोदाहरणमिति ख, ग, चिह्नितपुस्तकपाठः।

३ भरतवंशभूभुजामिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

४ अत्र वैतालीयलक्षणे प्राच्यवृत्त्युदीच्यवृत्तिलक्षणं वर्त्तते। अत इदं प्रवृत्तकं नाम वैतालीयं छन्दो बोध्यम्।

(१२७) अयुक् चारुहासिनी ॥ ४० ॥

यस्य सर्वे पादाः 'अयुग्'लक्षणयुक्ताः, तद् वैतालीयं, चारुहासिनी नाम। किं तल्लक्षणं, चतुर्दशमात्रत्वं, तृतीयेन पूर्वस्य योगः। तत्रोदाहरणम्।

रगणः लं० गु०

१ २ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १ २।३
म नाक् प्र स त द न्त दी धि तिः स्म रो-

रगणः लं० गु०

४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
ल्ल सि त ग ण्ड म ण्ड ला।

रगणः लं० गु०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १
क टा च ल लि ता तु का मि नी (१) म-

रगणः लं० गु०

२।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
नो ह र ति चा रु हा सि नी (२) ॥

---

१ कटाचललिता च कामिनामिति पुस्तकान्तरपाठः। कटाक्षललिता च कामिनीति ख, चिह्नितपुस्तकपाठः। कटाचललितेन कामिनीति ग, चिह्नितपुस्तकपाठः।

२ अत्र षोडशमात्रावर्जितं वैतालीयलक्षणं वर्त्तते, पुनः पादचतुष्टये द्वितीयतृतीयमात्रयोरेकत्र गुर्वक्षरं संस्थितिरस्ति। अत इदं वैतालीयपूर्वकं चारुहासिनीनामकं छन्दो बोध्यम्।

## (१३८) युगपरान्तिका ॥ ४१ ॥

युग्मचरणयुक्तैश्चतुर्भिः पादैः 'अपरान्तिका', नाम वैतालीयम्। किन्तल्लक्षणं, षोड़शमात्रत्वं पञ्चमेन पूर्वस्य योगः (१), षण्णां मिश्राणां प्रयोगश्च। ततोदाहरणम्।

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
स्थि र वि ला स न त मौ क्ति का व लो(२)

रगणः ल० गु०

१ २ ३ ४।५ ६ ७।८ ९ १० ११ १२।१३ १४ १५।१६
क म ल को म ला ङ्गो म्द गे च णा।

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
ह र ति क स्य हृ द यं न का मि नः

रगणः ल० गु०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
सु र त के लि कु श ला प रा न्ति का (३) ॥

इति वैतालीयाधिकारः ॥

---

१ पूर्वयोग इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ स्थिरविलासनयनोक्तिपेशलेति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। स्मितविलाससरसोक्तिपेशलेति ग, चिह्नितपुस्तकपाठः।

३ अत्र चतुर्दशमात्रावर्जितं वैतालीयलक्षणं प्रवर्त्तते। पुनः सर्वत्र चतुर्थपञ्चमा-पयोरेकगुर्वक्षरेवस्थानमस्ति, अत इदं वैतालीयपूर्वकमपरान्तिकानामकं छन्दो बोध्यम्।

( अथ मात्रासमकाधिकारः । )

## (१६९) गन्ता द्विर्वसवो मात्रासमकं नवमः ॥४२॥

वैतालीयमित्यादिसूत्रात् (१) सप्तम्यन्तं पादग्रहणमनुवर्त्तते। ल इति महाधिकारः(२)। तेनायमर्थः, यत्र पादे 'गन्ताः', सन्तः षोड़शलकारा भवन्ति, तन्मात्रासमकं नाम च्छन्दः (३)। अन्ते द्वाभ्यामेको गुरुः कर्त्तव्यः। नवमश्च लकार एव। 'द्विर्वसवः' इति द्विगुणिता वसवः, लकाराः षोड़श इत्यर्थः। शेषे परेण युङ् न साकमित्यनुवर्त्तनीयम्। तत्रोदाहरणम्।

ल०　ग०

१।२　३।४　५　६　७।८　९　१०।११　१२　१३।१४　१५।१६　१।२　३।४
अ　भ्र　भ्रु　मु　खो　वि　र　लै　र्द　न्तै　र्ग　म्भी-

ल०　ग०

५।६　७।८　९　१०　११।१२　१३।१४　१५।१६
रा　चो　मि　त　ना　सा　ग्रः (४)।

---

१ वैतालीयमितिसूत्रादिति खः।

२ ल इति च महानधिकार इति गः।

३ यस्य चतुर्षु पादेषु षोडशमात्राः भवन्ति, पुनः प्रतिपादान्ते एको द्विकलो गुरुस्तिष्ठति, न त्वेककलो गन्ते इत्यतिदिष्टो गुरुः। द्वितीयात्तृतीययोश्चतुर्थीपञ्चम्योर्मात्रायोरेकत्रानवस्थानं, पृक्पादे षष्ठीसप्तम्योर्मात्रयोश्च नैकत्रावस्थितिः। सर्वत्र नवमी लघुरूपा मात्रा भवति, तन्मात्रासमकं छन्दः। अत्र मात्रासमकाधिकारे लक्षणमेतत् सामान्यतः सर्वत्र बोध्यम्। अत्र पञ्चम्यष्टम्यादिलघुगुरुमात्राप्रभेदेन ये मात्रासमकप्रभेदाः, तांस्त्वग्रे वक्ष्यति। तत्प्रभेदज्ञापनाय मात्रासमकाद्युदाहरणोपरिविन्यस्तमात्राङ्कास्तत्र तत्र द्रष्टव्याः। अङ्कदर्शनेन च लक्षणसमन्वयः सर्वत्र कर्त्तव्यः।

४ गम्भीराचोन्नतनासाग्र इति ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

ल० गु०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६ १।२ ३।४
नि र्मा स च नुः स्फु टि तैः के शै र्मा त्रा-

ल० गु०

५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
स म कं ल भ ते दुः खम्॥

गन्त इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणम् (१) आतिदेशिकगुरुत्वनिवृत्त्यर्थम्। तेनात्र द्वौ लकारौ भङ्क्त्वा द्विमात्रिको गुरुः क्रियत इति वाक्यशेषः॥

(१४०) द्वादशश्च वानवासिका॥ ४३॥

यस्य मात्रासमकस्य पादे द्वादशो लकारः स्वरूपेणावतिष्ठते, चकारान्नवमश्च, तन्मात्रासमकं वानवासिका नाम। तत्रोदाहरणम्।

ल० ल० गु०

१।२ ३ ४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६ १
म न्म थ चा प ध्व नि र म णी यः सु-

ल० ल० गु०

२ ३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
र त म हो त् स व प ट ह नि ना दः।

१ पुनर्गन्त इति गग्रहणमिति पुस्तकान्तरपाठः।

ल० ल० गु०

१ २ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६ १।२ ३ ४
व न वा स स्तो स्व नि त वि शे षः क स्य न

ल० ल० गु०

५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
चि त्तं र म य ति पुं सः ॥

(१४१) विश्लोकः पञ्चमाष्टमौ ॥ ४४ ॥

द्वादशग्रहणं नवमग्रहणञ्च निवृत्तम्। यत्र चतुष्पादेषु[१] पञ्चमाष्टमौ लकारौ तिष्ठतः, शेषं यथाप्राप्तं, तन्मात्रासमकं विश्लोको नाम। तत्रोदाहरणम्।

ल० ल० गु०

१।२ ३४ ५ ६ ७ ८ ९।१० ११।१२ १३।१४ १५।१६ १।२ ३
भ्रा त गु ण र हि तं वि श्लो कं दु र्ण-

ल० ल० गु०

४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
य क र ण क द र्थि त लो कम्।

ल० ल० गु०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
जा तं म हि त कु ले[२] ऽप्य वि नी तं

१ यत्र पादेषु इति खः। यत्र चतुर्षु पादेष्विति गः।

२ महति कुलेऽप्यविनीतमिति खः, गश्च।

ल० ल० गु०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
मि त्रं प रि ह र सा धु वि गी तम्॥

(१४२) चित्रा नवमश्च ॥४५॥

यस्य 'नवमः' लकार एवावतिष्ठते, 'च'कारात् पञ्चमाष्टमौ च, तन्मात्रासमकं चित्रा नाम। तत्रोदाहरणम्।

ल० ल० ल० गु०

१ २ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६
य दि वा ञ्छ सि प र प द मा रो ढुं

ल० ल० ल० गु०

१।२ ३।४ ५ ६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
मै त्रीं प रि ह र स ह व नि ता भिः (१)।

ल० ल० ल० गु०

१।२ ३ ४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६ १।२
मु ह्य ति मु नि र पि वि ष या स ङ्गा च्चि-

ल० ल० ल० गु०

३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६
त्ता भ व ति हि म न सो वृ त्तिः॥

नवम इत्यनुवर्त्तमानेऽपि (२) पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम्॥

---

१ सह नारीभिरिति खः, गः, पुस्तकान्तरञ्च।

२ नवम इत्यनुवर्त्तमाने इति खः।

(१४३) परयुक्तेनोपचित्रा ॥ ४६ ॥

'परयुक्तेन' दशमेन सहैकीभूतेन नवमेन, उपचित्रा नाम भवति। पूर्व्वं लघुनियमेन लक्षणं प्रोक्तं। इदन्तु गुरुनियमेनोच्यते (१)। तत्रोदाहरणम्।

यच्चित्तगुरुसक्तमुदारं (२) वि-
द्याभ्यासमहाव्यसनञ्च।
पृथ्वीतस्य गुणैरुपचित्रा चन्द्र-
मरीचिनिभैर्भवतीयम् ॥

(१४४) एभिः पादाकुलकम् ॥४७॥

एषां पद्यानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः, पादा-

१ गुरुनियमेनेति गः।

२ गुरुसलकदारमिति गः।

कुलकं (१) नाम। मात्रासमक(२)विश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्।

ल० ग०

१ २ ३।४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६ १।२
अ लि वा चा लि त वि क सि त चू ते का

ल० ल० ग०

३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
ले म द न स मा ग म दू ते।

ल० ल० ग०

१।२ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६ १।२ ३ ४ ५
स्मृ त्वा का न्तां प रि हृ त सा र्थः पा दा कु-

ग०

६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
ल कं धा व ति पा न्थः (३) ॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः, पादाकुलकम्।

तत्रोदाहरणम्।

---

१ पादैर्मात्रासमकं पादाकुलकमिति गः।

२ अत्र मात्रासमकेति खः, पुस्तकान्तरञ्च। तत्र मात्रासमकेति गः।

३ अस्य चतुर्षु पादेषु षोडशमात्रा अन्ते गुरुश्चास्ति, पुनस्तेषां प्रथमः पादो नवममात्राया लघुत्वात् मात्रासमकलक्षणाक्रान्तो भवति, द्वितीयः, पञ्चमाष्टममात्रयोर्लघुत्वाद्विश्लोकलक्षणवान् पादः, तृतीयः, नवमद्वादशमात्रयोर्लघुत्वाद्वानवासिकालक्षणयुक्तः पाद। चतुर्थः, नमवदशममात्रयोरेकत्र गुर्वक्षरेवस्थितितयोपचित्रालक्षणसमन्वितः पादो भवति। एतादृशविभिन्नलक्षणाक्रान्तैश्चतुर्भिः पादैरुपशोभितं छन्दः पादाकुलकनामकं भवति।

ल० ल० गु०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६ १।२ ३ ४
पुंस्कोकिलकृतशोभनगीते(१)दक्षिण-

गु०

५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
पवनप्रेरितशीते।

ल० गु०

१ २ ३ ४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६ १।२ ३।४
मधुसमयेस्मिन् कृतविश्लोकः पादा-

गु०

५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
कुलकं नृत्यति लोकः(२)॥

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्यैकेन, पादाकुलकम्। ततोदाहरणम्।

ल० गु०

१।२ ३।४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६ १।२ ३।४ ५ ६ ७।८
चित्तं भ्राम्यत्यनवस्थानं पादाकुलक-

१ कृतपञ्चमगीते इति ग:।

२ अस्य चत्वारः पादा गुर्वन्ताः षोडशमात्रात्मकाः सन्ति पुनः तत्र प्रथमः पादो विश्लोकलक्षणवान्, द्वितीयः, उपचित्रालक्षणयुक्तः, तृतीयः, मात्रासमकलक्षणसम्पन्नः, चतुर्थः, पुनरुपचित्रालक्षणवान् पादोस्ति। एतादृशविभिन्नलक्षणैः पादैरुल्लसितमपि च्छन्दः पादाकुलकनामकं भवति। लक्षणान्येतत्पूर्वश्लोकोक्तमत्रापि स्मर्तव्यम्।

गु०

९।१० ११ १२ १३।१४ १५।१६
श्लो क स मा नम्।

गु०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६ १ २
का यः का य ति श्रा य ति(१)श्च क्ति स्त द-

ल० ल० गु०

३ ४ ५ ६ ७ ८ ९।१० ११।१२ १३ १४ १५।१६
पि न म म प र लो के भ क्तिः (२)॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेत्यर्थः।

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रा-पादाभ्यां, पादाकुलकं। तत्रोदाहरणम्।

गु०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६ १ २
प रि हृ त स र्व्व प रि ग्र ह लो कः प्र ति-

ल० ल० गु०

३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
दि न व र्द्धि त गु रु त र श्लो कः।

---

१ श्रीर्थतीति पुस्तकान्तरे पाठः।

२ अस्य चत्वारः पदा गुर्व्वन्ताः षोडशमात्रात्मकाः सन्ति। तत्र प्रथमः, नवमलघुमान् मात्रासमकपादः, द्वितीयतृतीयौ, नवमदशममात्रयोरेकत्वावस्थितियुक्तौ उपचित्रा-पादौ, चतुर्थः, पञ्चमाष्टमलघुमात्रावान् विश्लोकपादोस्ति। एतादृशविलक्षणपादै-र्विशिष्टमपि छन्दः पादाकुलनामकं भवति।

गु०

१।२ ३ ४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६ १।२ ३।४
दुः ख वि व र्द्धि त लो च न वा रिः[१] पा दा-

गु०

५ ६।७ ८ ९।१० ११ १२ १३।१४ १५।१६
कु ल कं या ति त वा रिः[२] ॥

इति मात्रासमकाधिकारः ॥

---

## (१४५) गीत्यार्य्या लः ॥ ४८ ॥

यत्र पादे द्विर्वसवः, षोड़शलकाराः, भवन्ति, सा गीत्यार्य्या नाम जातिः। ल इत्यनुवर्त्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् ॥ तत्रोदाहरणम् ॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
म द क ल ख ग कु ल क ल र व मु ख रि णि

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
वि क सि त स र सि ज प रि म ल सु र भि णि।

---

१ दुःखविवर्जितलोचनवारिरिति पुस्तकान्तरे पाठः।

२ यातु तवारिरिति स्वः, पुस्तकान्तरञ्च। अस्य चत्वारः पादा गुर्वन्ताः षोडशमात्रकाः सन्ति। तत्र प्रथमतृतीयचतुर्थाः, नवमदशमयोरेकत्वावस्थितिमन्त उपचित्रापादाः, द्वितीयः, नवमद्वादशलघुमात्राविशिष्टो वानवासिकापादो वर्त्तते। एतादृशविभिन्नलक्षणवत्पादैरुपशोभितमपि छन्दः पादाकुलकनामकं भवति।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
गि रि व र प रि स र स र सि म ह ति ख लु (१)

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र ति र ति श य मि ह म म हृ दि वि ल स ति॥

सर्व्वलघुच्छन्दसि (२) गीत्यार्य्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम्॥

(१३६) शिखा विपर्य्यस्तार्द्धा॥ ४९॥

सैव गीत्यार्य्या 'विपर्य्यस्तार्द्धा', यदा भवति तदा शिखाख्यां लभते। अयमर्थः। यत्रार्द्धं सर्व्वलघु भवति, अर्द्धञ्च सर्व्वगुर्व्विति। एवं तस्या एव विन्यासभेदेन सञ्ज्ञाद्वयमाह।

(१३७) लः पूर्व्वश्चेज्ज्योतिः॥ ५०॥

'पूर्व्वश्चेत्' अर्द्धभागः, सर्व्वलघुर्द्वात्रिंशल्लकारो भवति, उत्तरश्च सर्व्वगुरुः, षोड़शगकारः, तदा ज्योतिर्नाम शिखा भवति। तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
य दि सु ख म नु प म म प र म भि ल ष सि

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
प रि ह र यु व ति षु र ति म ति श य मि ह।

१ महति सतीति खः, पुस्तकान्तरञ्च।

२ सर्व्वलघुनि च्छन्दसीति खः. गः, पुस्तकान्तरञ्च।

१ २ ३ ४ ५ ६ ७ ८
आ त्म ज्यो ति र्यो गा भ्या साद्

९ १० ११ १२ १३ १४ १५ १६
हृ ष्ट्वा दुः ख च्छे दं कु र्य्याः (१५)॥

(१४८) गस्त्वेत् सौम्या ॥ ४१ ॥

तस्या एव शिखायाः पूर्व्वार्द्धभागः (१) सर्व्वगुरु षोड़शगकार-श्चेद् भवति, उत्तरश्च द्वात्रिंशल्लकार एव, तदा सौम्या नाम शिखा भवति। तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८
सौ म्यां हृ ष्टिं दे हि स्ने हाद्

९ १० ११ १२ १३ १४ १५ १६
दे हे स्मा कं मा न मु क्त्वा।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
श्र श्र ध र मु खि मु ख मु प न य(२)म म हृ दि

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
म न सि ज रु ज म प ह र ल घु त र मि ह॥

(१४९) चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् (३) ॥ ४२ ॥

अर्द्धग्रहणमनुवर्त्तते। यत्र प्रथमेऽर्द्धे 'एकोनत्रिंशल्लकारा भवन्ति, द्वितीये चार्द्धे' 'एकत्रिंशत्,' तयोश्च 'अन्ते', द्वौ लकारावुन्मूल्य

---

१ पूर्व्वार्द्धभाग इति खः।

२ सुखमुपनयेति खः, गः, पुस्तकान्तरञ्च।

३ चूलिकैकान्नत्रिंशदेकत्रिंशदन्ते इति खः।

प्रत्येकमेको गुरुः क्रियते, तच्चूलिका नाम च्छन्दः। अन्ते गिति विशेषोपादानसामर्थ्यादन्येषां लघुत्वमुक्तं भवति। तेनाद्ये सप्तविंशतिर्लघवोऽन्ते (१) गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंशल्लघवोऽन्ते गुरुश्चैकः (२)॥ तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
र ति क र म ल य म रु ति शु भ श शि-

गु०१
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
म भि रु त(३)रुचि म म रु सि म धु स म ये।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
प्र व स सि प थि क वि र चि त क थ मि रु तु

गु०१
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३०।३१
प रि हृ त(४)यु व ति र ति च प ल त या (५)॥

अन्यैः पुनरन्यथैवेदं सूत्रमधीयते (६), चूलिकार्द्धमेकोनत्रिंशदन्ते गिति। तेषामुभयोरप्यर्द्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति। तत्रोदाहरणम्।

---

१ लघवोऽन्तेचेति खः, गः, पुस्तकान्तरञ्च।

२ एकोनत्रिंशन्मात्रा गुर्वन्ता भवन्तीति खः, पुस्तकान्तरञ्च।

३ शुचिशशप्रभृति रुतेति खः, पुस्तकान्तरञ्च।

४ पथिक रुतकरुण कथमिदमपहृतेति खः,

५ युवतिरतिरपि नयनाभिति खः, पुस्तकान्तरञ्च। युवतिरतिरनलसमिति गः।

६ अन्ये पुनरन्यथेदं सूत्रमभिदधतीति खः, पुस्तकान्तरञ्च।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
घ न प रि म ल मि ल द लि कु ल मु ख-

गु० १

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८,२९
रि त नि खि ल क म ल म ल य प व ने(१)।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३
ज न य ति म न सि(२)भ्र भ्रि मु खि मु द-

गु० १

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८,२९
म ति भ्र य मि ह म म म धु र य म धु ना॥

अर्द्धग्रहणादत्र पादव्यवस्था नास्ति॥

इदानीं गणमालाच्छन्दसां गुरुलघुसङ्ख्यापरिज्ञापनार्थमिदमाह।

(१५०) सा ग्येन न समा लां ग्ल इति॥४३॥

'सा' गुरुसङ्ख्या वेदितव्या, 'येन' यावद्भिरक्षरैः, 'लां' लघूनां मात्राणां, 'समाः' समसङ्ख्याः, 'ग्लः', 'न', स्युः, अपितु न्यूनसङ्ख्या एव। 'ग्लः', इत्यक्षराण्यभिधीयन्ते, तेषां गुरुलघुरूपत्वात्(३)। अयमभिप्रायः, आर्य्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासङ्ख्यं न पूर्य्यन्ते, सा तत्र गुरु-

१ कमलकुवलयवने इति खः, पुस्तकान्तरञ्च।

२ जनयति हृदीति गः।

३ गुरुलघुस्वरूपत्वादिति खः, पुस्तकान्तरञ्च।

सङ्ख्या वेदितव्या, अवशिष्टा लघुसङ्ख्या। तत्रायमुपयोगः, कदाचित् पृच्छति, चत्वारिंशदक्षरायामार्य्यायां कति गुरवः सम्पद्यन्ते, कति वा लघव इति। तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्य्यायां मात्रासङ्ख्यायां चत्वारिंशदक्षरसङ्ख्यामपनीय(१) तत्र येऽवशिष्यन्ते, तान् गुरूनुपदिशेत्। ते च सप्तदशैव। शेषांस्तु त्रयोविंशतिलघूनुपदिशेत् (२)। तद्यथा,

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५।६ | ७।८ | ९।१० | ११।१२ | १३ | १४।१५ | १६ | १७ | १८ |
| । | । | । | । | ऽ | ऽ | ऽ | ऽ | । | ऽ | । | । | । |
| स्त | न | यु | ग | म | श्रु | स्ना | तं | स | मी | प | त | र- |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १९।२० | २१ | २२ | २३ | २४ | २५।२६ | २७।२८ | २९।३० |
| ऽ | । | । | । | । | ऽ | ऽ | ऽ |
| व | र्त्ति | हृ | द | य | शो | का | ग्नेः। |
| १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३१ | ३२ | ३३ | ३४ | ३५।३६ | ३७।३८ | ३९।४० | ४१।४२ | ४३ | ४४ | ४५ | ४६ | ४७ |
| । | । | । | । | ऽ | ऽ | ऽ | ऽ | । | । | । | । | । |
| च | र | ति | वि | मु | क्ता | हा | रं | व्र | त | मि | व | भ- |
| २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ |

---

१ सङ्ख्यामपनयेदिति खः पुस्तकान्तरञ्च।

२ अस्याभिप्रायः स्पष्टमुच्यते, अस्यामार्य्यायां कति गुरवो लघवश्च सन्तीति पृष्टे प्रथमं तावत्तामार्य्यां लिखित्वा तस्याः सर्व्वासां मात्राणां गणनां कृत्वा तन्मात्रासङ्ख्यापिण्डं पश्चादौ कुचित् संस्थापनीयम्, पुनस्तस्या एवाक्षराणि गणयित्वा तदक्षरसङ्ख्यापिण्ड मात्रासङ्ख्याया अधः स्थापनीयम्। ततो मात्रासङ्ख्यातोऽक्षरसङ्ख्यामपनयेत्। तत्र येऽङ्का अवशिष्यन्ते तावत्सङ्ख्याकास्तदार्य्यायां गुरवो भवन्ति। पुनरक्षरसङ्ख्यात एतदवशिष्टगुरुसङ्ख्यामपनयेत्। तत्र येऽङ्का अवशिष्यन्ते तावत्सङ्ख्याकास्तत्र लघवो भवन्ति, एतत्प्रक्रियया आर्य्यावैतालीयादिगणमात्राच्छन्दसां गुरुलघुपरिज्ञानं जायते।

४८ ४९।५० ५१ ५२।५३ ५४।५५ ५६।५७
। ऽ । ऽ ऽ ऽ
**व तो रि पु स्त्री णाम्** (१) ॥ कादम्बरी।
३५ ३६ ३७ ३८ ३९ ४०

इति भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ
चतुर्थोऽध्यायः ॥ ४ ॥

---

( अथ पञ्चमोऽध्यायः । )

## (१४१) वृत्तम् ॥ १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यदित ऊर्द्ध्वमनुक्रमिष्यामस्तद्वृत्तं वेदितव्यम्। तेन प्राक्तनं लौकिकं छन्दोजातं जातिरित्युच्यते। इत उत्तरञ्च वृत्तम्। तथाचोक्तम् "पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।" गायत्र्यादौ छन्दसि

---

१ अस्यामार्यायां सप्तपञ्चाशन्मात्राश्चत्वारिंशदक्षराणि च सन्ति, तत्र मात्रासङ्ख्यातोऽक्षरसङ्ख्यायां विगतायां सप्तदशाङ्कोऽवशिष्यते, अतोऽस्यां सप्तदशगुरवः सन्तीति ज्ञायते। पुनरक्षरसङ्ख्यातः सप्तदशात्मकगुरुसङ्ख्यायामपनीतायां त्रयोविंशत्यङ्कोऽवशिष्यते, अतोऽस्यां त्रयोविंशतिलघवः सन्तीति निश्चीयते। एवं सर्वत्र गणमात्राच्छन्दःसु गुरुलघुपरिज्ञानं कर्त्तव्यम्। उक्तार्थोऽङ्कतोऽपि प्रदर्श्यते। यथा,

हार्य्याङ्कः ५७, मात्रासङ्ख्यात्मकः। हार्य्याङ्कः ४०, अक्षरसङ्ख्यात्मकः।
हारकाङ्कः ४०, अक्षरसङ्ख्यात्मकः। हारकाङ्कः १७, गुरुसङ्ख्यात्मकः।
लब्धाङ्कः १७, गुरुसङ्ख्यात्मकः। लब्धाङ्कः २३, लघुसङ्ख्यात्मकः।

वर्त्तत इति 'वृत्तम्'। तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते(१)। पादेन संयोगात् पद्यं। यथा आर्य्यादिच्छन्दःस्वपि पाद-व्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथक् भवत इत्यर्थः। संयोगाभावात् (२) तथाचोक्तम्। "एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्" इति॥

(१५२) समर्द्धसमं विषमञ्च॥ २॥

समसर्व्वावयवत्वात् 'समं'। यस्य चत्वारः पादा एकलक्षण युक्तास्तत् समं वृत्तम्(३)। शेषञ्च(४) सञ्ज्ञानुरूपमेव। तत्रार्द्धं समे(५) यस्य तत् 'अर्द्धसमं'। सर्व्वावयवेभ्योऽर्द्धाभ्याञ्च विगतं समं यस्य तत् 'विषमम्'। एवं त्रिप्रकारमपि वृत्तजातमुक्तम्॥

(१५३) समं तावत्कृत्वःकृतमर्द्धसमम्॥ ३॥

'समम्' इति समवृत्तसङ्ख्योच्यते। तयैव गुणितं(६)तावत्कृत्वः-कृतं', उच्यते। एतदुक्तं भवति, समवृत्तसङ्ख्यागुणिते समवृत्त-सङ्ख्यायाः पिण्डे या सङ्ख्या निष्पद्यते, तावत्सङ्ख्यमर्द्ध-समं वेदितव्यं। तत्र गायत्रे छन्दसि समवृत्तसङ्ख्या चतुः-

---

१ पादनियतमिति यावात्, संयोगयोरभावात् यथेति गः। पादयोः संयोगौ तयोर्विरहाद्यथेति खः।

२ पादसंयोगयोरभावादिति खः, गश्च।

३ समवृत्तमिति पुस्तकान्तरम्।

४ शेषमिति खः।

५ तत्रार्द्धं समिति खः,।

६ तावदङ्कगुणितमिति गः।

षष्टिरष्टमध्यायसिद्धा। तस्यां चतुःषष्टिसङ्ख्यागुणितायामर्द्ध समवृत्तसङ्ख्या सम्पद्यते। चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि(१)। अङ्कतोऽपि४,०८६ ॥

## (१४४) विषमञ्च ॥ ४ ॥

अर्द्धसमं तावत्कृत्वःकृतं 'विषमं', भवति। एतदुक्तं भवति. अर्द्धसमवृत्तसङ्ख्या अर्द्धसमवृत्तसङ्ख्ययैव गुणिता विषमवृत्त सङ्ख्या सम्पद्यते। एका कोटिः, सप्तषष्टिर्लक्षाणि, सप्तसप्तति सहस्राणि, द्वे शते षोड़शोत्तरे। अङ्कतोऽपि १,६७,७७,२१६। समसमार्द्धसमोपचितं, अर्द्धसमं विषञ्च यथाक्रमं समोपचितं समार्द्धसमाभ्याञ्च उपचितं वेदितव्यम्(२) ॥

---

१ चतुर्विंशत्यचरात्मकस्य गायत्रीच्छन्दसश्चतुष्पाद्व्यवस्थायां पादाक्षराणि षड़ेव भवन्ति. तेषां वर्णप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताश्चतुःषष्टिरेव भेदा जायन्ते। तेषां मध्यात् क्रमव्युत्क्रमप्रकारेण कश्चिदपि भेदद्वयमादायार्द्ध समवृत्ते कर्त्तव्ये चतुःषष्टिसङ्ख्यायाश्चतुःषष्टिवारमावृत्तिः कृता भवति। एवं क्रियमाणे चतुःषष्टिसङ्ख्ययैवैषा गुणिता भवति। तथा सति कत्यर्द्धसमवृत्तानि जातानीति तत्सङ्ख्यापरिज्ञानार्थं तद्गुणनप्रकार एष प्रदर्श्यते। यथा,

६४, गुण्याङ्कौ.

६४, गुणकाङ्कौ, तत्र.

२५६, चतुर्भिश्चतुःषष्ट्यां गुणितायां जाताङ्काः।

३८४ पुनः षड्भिस्तस्यां गुणितायां जाताङ्काः।

४०९६ सङ्कलनाया जाताङ्काः।

२ पुनः षण्णवत्युत्तरचतुःसहस्रसङ्ख्याकानामर्द्धसमवृत्त भेदानां मध्याद्विभिन्नलक्षण भेदचतुष्टयं भेदत्रयं वा पूर्वपूर्वैकभेदत्यागक्रमेणादाय विषमवृत्ते क्रियमाणे उक्त सङ्ख्यायास्तावद्वारमावृत्तिः कृता भवति, एवं क्रियमाणे उक्तसङ्ख्ययैव साऽगुणिता भवति, तथा सति कति विषमवृत्तभेदा जायन्ते इति तत्सङ्ख्याबोधार्थं

# BIBLIOTHECA INDICA:

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

## ASIATIC SOCIETY OF BENGAL.

New Series, No. 258.



# पिङ्गलच्छन्द सूत्रम् ।

# CHHANDAH SU'TRA

OF

## PINGA'LA A'CHA'RYA

WITH THE

COMMENTARY OF HALA'YUDHA

EDITED BY

PANDITA VIS'VANA[illegible]

[illegible]



# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

## *No. 45, Park Street.*

## I.—THE SOCIETY'S PUBLICATIONS

### A. Bibliotheca Indica

### Sanskrit Works complete.

*Old Series, Nos. 1 to 230 demi 8vo.* Rs

The first two Lectures of the Sañhitá of the Rig Veda. Edited by Dr. E Roer, Nos. 1 to 4, ... .. 2

Uttara Naishadha Charita, by S'ri Harsha, with a Commentary. Edited by Dr E. Roer. 12 Fasciculi, . 7

Chaitanya Chandrodaya, Nántaka by Kavikarnapura. Edited by Bábu Rájendralála Mitra. 3 Fasciculi, .. ... 1

Vásavadattá, by Subandhu, with its commentary entitled Darpana Edited by Professor F E Hall M A 3 Fasciculi, .. 1

The Márkandeya Purána. Edited by the Rev. K. M Banerjea 7 Fasciculi, ... ... .. ... 4

The Elements of Polity, by Kámandaki Edited by Rájendralála Mitra. 2 Fasciculi, ... ... .. .. 1

*New Series, Nos. 1 to 257, demi 8vo.*

The S'rauta S'útra of A'svaláyana, with the Commentary of Gárgya Náráyana. Edited by Pandita Rámanáráyana Vidyáratna 10 Fasciculi. .. ... ... .. ... 6

The S'añkara Vijaya of Anantánanda Giri Edited by Pandita Jayanáráyana Tarkapañchánana. 3 Fasciculi, .. ... 1

Vais'eshika Dars'ana, with Commentaries of S'añkara Mis'ra &c Edited by Pandita Jayanáráyana Tarkapanchánana. 5 Fasciculi, 3

The Nyáya Dars'ana of Gotama, with the Commentary of Vátsyáyana Edited by Pandita Jayanáráyana Tarkapanchánana 3 Fasciculi, 1

Páli Grammer, by Kácchayana, Edited by Dr. F. Mason. 2 Fasciculi, 1

The Das'a-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D. C. L. 3 Fasciculi, ... ... ... 1

The Aphorisms of S'ándilya with the commentary af Svapnes'vara. Edited by J. R. Ballantyne, LL. D., .. .. 0

The Nárada Pancharátra. Edited by the Rev. K. M. Banerjea. 4 Fasciculi, ... ... .. .. 2

The Kaushítaki-Bráhmana-Upanishad with Commentary, and a translation by E. B. Cowell. M. A. 2 Fasciculi, .. 1

The Kávyádars'a, of S'ri Dandin. Edited with a Commentary by Pandita Premachandra Tarkavágis'a. 5 Fasciculi, ... 3

अङ्कतः(१) १,६७,७३,१२० । चत्वारि सहस्राणि, द्वात्रिंशच्चेति शुद्धार्द्धसमसङ्ख्या (२) ४०३२ । उभयशेषोऽयं राश्यूनमिति ।

## (१५६) ग्लिति समानी ॥ ६ ॥

गकारलकाराभ्यां यद्वृत्तं समाप्येत(३) तत् समानी नाम । पादस्यानुष्टुब्वक्त्रमित्यत. ( ५।८ ) सूत्रात् सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्त्तते । तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्य्यते. तावतामेव ग्रहणम् । तत्रोदाहरणम् (४) ।

ऽ । ऽ ' ऽ । ऽ । ऽ । ऽ । ऽ । । ऽ ।

वासवोऽपि विक्रमेण यत्समानतां न याति ।

२ ८(१७१ ६३ १२८

ऽ । ऽ । ऽ । ' ऽ । ऽ । ऽ । ' ऽ ।

तस्य वक्त्रभेश्वरस्य केन तुल्यता क्रियेत (५) ॥

१ अङ्कतोऽपीति ख० ।

२ अङ्कतोऽपीति ग०, चिह्नितपुस्तकेऽधिक पाठोऽस्ति ।

३ समाप्यते इति ख , ग० पुस्तकान्तरपाठश्च ।

४ अत्रोदाहरणमिति पुस्तकान्तरम् ।

५ अत्र ग्लिति समानीत्यनेन बाधात्पादान्तस्य लघोर्गन्त इति गुरुत्व न भवति ।

अनुष्टुपच्छन्दस. पादषटकीभूतानामष्टाक्षराणां वर्णप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ता. षट्पञ्चाशदधिकद्विशतभेदा जायन्ते, तेषा कतिपयप्रसिद्धभेदानामेव प्रयोगोऽस्ति. तत्र यो भेदो यत्र समायास्यति, तत्सङ्ख्यापरिज्ञानार्थं पादस्थितलघ्वक्षराधोऽङ्कविन्यास करिष्यामि । तत्र एक दत्वा एकीकृतेषु लघ्वङ्केषु या सङ्ख्या निष्पत्स्यति, सैव तद्भेदज्ञापिका भविष्यति । एतन्नियमानुसारेणात्र लघ्वङ्कसन्दोहे कृते वासवोऽपीति श्लोकोऽष्टाक्षरप्रस्तारस्य एकसप्तत्युत्तरशततमभेदो भवतीति ज्ञायते । एवं सर्वत्रानुष्टुप्स्थले प्रस्तारभेद प्रत्येतव्य ।

अपिच।

ओँ नमो जनार्दनाय पापसङ्घमोचनाय(१)।
दुष्टदैत्यमर्द्दनाय पुण्डरीकलोचनाय॥

(१५७)लिगति प्रमाणी॥७॥

लकारगकाराभ्यां यद्वृत्तं समाप्येत(२) तत् 'प्रमाणी' नाम। नाराचमित्यपरे(३)। तत्रोदाहरणम्।

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ
सरोजयोनिरम्बरे रमातले तथाच्युतः।
१ ४ १८६ १६ ६४

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ
तव प्रमाणमीक्षितुं क्षमौ न तौ बभूवतुः(४)॥

(१५८) वितानमन्यत्॥८॥

आभ्यां समानीप्रमाणीभ्यां 'अन्यत्' अष्टाक्षरपादं छन्दो 'वितानं' नाम(५)। अत्रोदाहरणम्।

---

१ पापबन्धमोचनायेति ख०, ग०, पुस्तकान्तरपाठश्च।

२ समाप्यते इति ख०, ग० पुस्तकान्तरपाठश्च।

३ अत्र पादाष्टाक्षराणां गुरोरनन्तरं लघुर्लघोरनन्तरं गुरुः, एवं विन्यासद्वयभेदेन समानीप्रमाण्योर्लक्षणमुक्तम्। यदि तेष्वेव गणविभागनियमेन तयोर्लक्षणं क्रियते चेत् तदा द्वौ गणौ एको गुरुरेको लघुश्च सम्पद्यते। इममेव प्रकारमवलम्ब्य छन्दोमञ्जरीवृत्तरत्नाकरकाराभ्यां तयोर्लक्षणमुक्तम्, ग्लौ रजौ समानिका तु इति (छ०), समानिका गलौ च इति (वृ०) प्रमाणिका जरौ लगाविति (छ० वृ०)।

४ अष्टाक्षरप्रस्तारस्य षडशीतितमोयं भेदः।

५ पूर्वमेकस्य गुरोरनन्तरमेको लघुः, पुनरेकस्य लघोरनन्तरमेको गुरुः, एवं क्रमेण

S S | | S S | | S S | | S S | |
तृष्णां त्यज धर्म्मं भज पापे हृदयं मा कुरु ।
४ ८ (२०५) ६४ १२८

S S | | S S | | S S | | S S | |
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय(१) ॥

द्वितीयश्च ।

| | S S | | S S | | S S | | S S
हृदयं यस्य विशालं गगनाभोगसमानम् ।
१ २ १६ ३२ (५२)

| | S S | | S S | | S S | | S S
लभतेऽसौ मणिचित्रं नृपतिर्मूर्द्ध्नि वितानम्(२) ॥

अन्यच्च ।

S S ' ' ' ' ' ' '
कङ्कालमालभारिणं(३) कन्दर्पदर्पहारिणम् ।
१६ (८५) ६४

S S | S | | | | | | S | | S
संसारबन्धमोचनं वन्दामहे त्रिलोचनम्(४) ॥

---

लक्षणद्वयमुक्तम्। इदानीन्तु द्वयोर्गुर्वोरनन्तरं द्वौ लघू द्वयोर्लघ्वोरनन्तरं द्वौ गुरू, एवमादि क्रमेण लक्षणमुच्यते अत इदं समानीप्रमाणीभ्यामन्यदेव जातमिति भावः ।

१ अष्टाक्षरप्रस्तारस्य पञ्चोत्तरद्विशततमोऽयं भेदः । वितानलक्षणेन बाधाभावात् गन्ते इति पादान्तस्य लघोर्गुरुत्वं भवति ।

२ द्वयोर्गुर्वोरनन्तरं द्वौ लघू, द्वयोर्लघ्वोरनन्तरं द्वौ गुरू, इत्येवं क्रमेण गुरुलघुविन्यासयुक्तं वितानमुक्तम्, इदन्तु तद्विपरीतलक्षणविशिष्टं द्वितीयप्रकारकं वितानं बोध्यम्। अष्टाक्षरप्रस्तारस्य द्विपञ्चाशत्तमोऽयं भेदः। पूर्वश्लोकेऽप्रविष्टं वितानमित्येतच्छन्दोनामात्र निवेशितम् ।

३ कङ्कालमालधारिणमिति ग० ।

४ अत्र पादे प्रथमं द्वौ गुरू, तत एकलघोरनन्तरमेको गुरुर्वर्त्तते अत इदमन्यत्-

अपि च ।

**तस्याः स्मरामि सुन्दरं चन्द्रोपमानमाननम् ।**
**कन्दर्पचापभङ्गुरभ्रूविभ्रमोपशोभितम् ॥**

**अन्यदतो हि वितानं श्वेतपटेन यदुक्तम् ।**
**चित्रपदापि च भौगौ तेन गतार्थमिवैतत्(१) ॥**

किञ्च वितानमन्यदिति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां (२) दर्शयति । अन्यथा वितानं भौगौ इत्येव विदध्यात् (३) ॥

---

प्रकारकं वितानं ज्ञेयम् । अष्टाक्षरप्रस्तारस्य पञ्चाशीतितमोऽयं भेदः । तस्याः स्मरामीति वृत्तमप्येतादृशमेव ।

१ भौगिति चित्रपदाग इति वृत्तरत्नाकरम् । चित्रपदा यदि भौगाविति छन्दोमञ्जरी । अष्टाक्षरप्रस्तारस्य पञ्चपञ्चाशत्तमोऽयं भेदः । पूर्वतोविभिन्नलक्षणमिदमप्यपरप्रकारकं वितानं बोध्यम् ।

२ अनेकतामिति पुस्तकान्तरपाठः । अष्टाक्षरप्रस्तारस्य यावन्तो भेदा भवन्ति, तेषां यं कमपि भेदमादाय क्रियमाणं समानीप्रमाणीभ्यामन्यद्वृत्तं वितानंनामकं विज्ञेयम् । तच्च चतुःपञ्चाशोत्तरद्विशतसङ्ख्यापरिमितं भवत्यत एवास्यानेकप्रकारता सूत्रकारेण दर्शिता । केचिदस्य कतिपयाः प्रसिद्धभेदा नामान्तरेण व्यवहृता अपि वितानभेदा एव ते भवन्तीति बोध्यम् । यतः सूत्रकारेण समानीप्रमाणीभ्यामन्ये वितानात्मनैव व्यवहृताः ।

३ भौगौ इति ब्रूयादिति ख०, पुस्तकान्तरपाठश्च । यदि चित्रपदा एकैव वि-

(१५९)पादस्यानुष्टुब् वक्त्रम् ॥ ९ ॥

पादस्येत्ययमधिकार आसप्तमाध्यायसमाप्तेः(१)। अनुष्टुब् वक्त्रमिति च प्राक् पदचतुरूर्द्ध्वादधिकृतं (२) वेदितव्यम् ॥

(१६०)न प्रथमात् स्नौ ॥ १० ॥

प्रतिषेधार्थसूत्रमिदं। अत्र वक्त्रजातौ पादस्य 'प्रथमात्' वर्णादूर्द्ध्वं, सगणनगणौ 'न' कार्य्यौ (३) ॥

(१६१)द्वितीयचतुर्थयो रश्च ॥ ११ ॥

'द्वितीयचतुर्थयोश्च' पादयोः प्रथमादूर्द्ध्वं रेफोऽपि न कर्त्तव्य इत्युपदेशः ॥

(१६२) वान्यत् ॥ १२ ॥

सगणनगणाभ्यां 'अन्यत्' मगणादित्रिकषट्कमध्ये यत् किञ्चित् त्रिकान्तरं 'वा' (४) कर्त्तव्यम् ॥

---

तान, तदा वितान भोगावित्यनेनैवालम्। किमर्थं वितानमन्यदित्यविशेषोक्त्यनुशरण-मिति भाव.।

१ परिसमाप्तेरिति ग०, पुस्तकान्तरपाठश्च।

२ प्राक् प्रतिपाद चतुर्द्दात् पदचतुरूर्ध्वादधिकृतमिति ख०।

३ प्रथमादक्षरादूर्द्ध्वं सकारनकारौ न कर्त्तव्याविति पुस्तकान्तरपाठः।

४ अन्येषां षण्णां मध्ये यत् किञ्चित् गणान्तर प्रथमान्तर कर्त्तव्यमिति पुस्तकान्तर पाठ। त्रिकान्तर कर्त्तव्यम्, अन्येषां षण्णां गणानां मध्ये यत् किञ्चिद्गणान्तर प्रथमानन्तरमिति ख०।

(१६३) य चतुर्थात् ॥ १३ ॥

य इति लुप्तविभक्तिको निर्द्देशः। पादस्य 'चतुर्थात्' अक्षरादूर्द्ध्वं यकारः (१) प्रयोक्तव्यः। सर्व्वेषामुदाहरणम् (२)।

ल॰१ यगण यगणः ल॰ ल॰१ यगणः यगणः गु॰

। । ऽ ऽ । ऽ ऽ । । । ऽ ऽ । ऽ ऽ ऽ

नवधाराम्बु-संसिक्त वसुधागन्धि-निःश्वासम्(३)।

१ २ १६ (१४८। १२८ १ २ १६ (२०)

गु॰१ जगण यगण गु॰ ल॰१ नगण यगण. गु॰

ऽ । ऽ । । ऽ ऽ ऽ । ऽ ऽ । । ऽ ऽ ऽ

किञ्चिदुन्नतघोणाग्रं(४)मद्दो(५)कामयते वक्त्रम्(६)॥

२ ८ १६ (२१) १ ८ १६ (२६)

अन्यैरप्युक्तम्।

१ यगण इति ख॰ ग॰ च।

२ प्रतिसिद्धगणत्रयान्यतमगणविशिष्टानां प्रत्येकमनुष्टुप्छन्दसामुदाहरणमित्यर्थः।

३ पृथ्वीसुगन्धिनिश्वासमिति क॰। पृथ्वी सुगन्धिनिःश्वासमिति पुस्तकान्तरपाठः।

४ किञ्चिद्समुन्नतघोणमिति क॰ किञ्चिदुन्नतघ्राणाग्रमिति ग॰।

५ मद्दोमिति ग॰ पुस्तकान्तरपाठश्च।

६ अस्य प्रत्येकपादस्य प्रथमादक्षरात् परं मगणनगणौ नस्तः, अपितु यगणजगणतगणाः सन्ति। पुनर्द्वितीयचतुर्थपादयोः पादप्रथमाक्षरात् परं रगणो नास्ति, यतो नस्तु, अत इदं वक्त्रनामकमनुष्टुप्छन्दो ज्ञेयम्। पृथ्वीसुगन्धिनिःश्वासम्, पृथ्वी सुगन्धिनिश्वासम्, इति पाठद्वयन्तु न समञ्जीनम्। अत्र प्रथमाक्षरात्परं प्रतिषिद्धस्य रगणस्य सत्त्वात्। अत्रेदं स्मरणीयम्, समानीप्रमाणीभ्यामन्यतमं यं कमप्येकमनुष्टुब्भेदमादाय क्रियमाणं वृत्तं वितानन्नामकं भवति, द्वाभ्यां त्रिभिश्चतुर्भिर्वा विभिन्नलक्षणैरनुष्टुब्भेदैर्विरच्यमानं वृत्तं वक्त्रजात्यन्तर्गतमनुष्टुप्छन्दो भवतीति। एवं सत्यनुष्टुप्छन्दो मात्रं हि विषमं वृत्तं जायत इति बोध्यम्।

अस्य प्रथमः षडोष्टाक्षरप्रस्तारस्य अष्टचत्वारिंशदुत्तरशततमो भेदः, द्वितीयः,

गु०१ भगणः यगणः ल०ल०१ भगणः यगणः गु०

S S I I I S S I I I S S I S S S

नीलोत्पलवनेष्वद्य चरन्त्यश्वारुसंरावाः।
(१५७) ४ ८ १६ १२८ १ १६ १८)

गु०१ भगण. यगणः गु० ल०१ भगण यगणः गु०

S S S S I S S S I S S S I S S S

रामाः कौशेयसंवीता. प्रनृत्यन्तश्च(१)कादम्बाः(२)॥
१६ (१७) ४ १६ (१८)

तथा।

गु०१ रगण. यगण. गु० गु०१ भगण यगण गु०

S S I S I S S S S S I I S S S

दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते(३)प्रीतिः।
४ १६ (२१) ४,८ १२ (२९)

---

विंशतितम, तृतीय. सप्तविंशतितमः चतुर्थ, षड्विंशतितमो भेदो भवति।

१ प्रनृत्यन्तीव इति ख०, ग०, पुस्तकान्तरपाठश्च।

२ अस्य प्रत्येकपादस्य प्रथमाक्षरात्परं सगणनगणौ न स्तः, अपितु भगणसगणौ स्तः, द्वितीयचतुर्थपादयोः प्रथमाक्षरात्परं रगणोऽपि नास्ति, पुनरस्य चतुर्षु पादेषु चतुर्थादक्षरात्परं यथालक्षणं यगणोऽस्ति। अत इदं पूर्वतः किञ्चिद्विभिन्नलक्षण-मपरजातीयं वक्त्रनामकमनुष्टुप्छन्दो ज्ञातव्यम्। अस्य प्रथमः पादोऽष्टाक्षरप्रस्तारस्य सप्तपञ्चाशदुत्तरशततमो भेदः, द्वितीयचतुर्थावष्टादशौ, तृतीयः सप्तदशो भवति। अत्रानुष्टुब्वक्त्रजातौ प्रतिपादाधः स्थितसैकाङ्कसन्दोहोऽष्टाक्षरप्रस्तारस्य तत्तद्भेदपरिज्ञापको भवतीति स्मर्तव्यम्। ग्रन्थबाहुल्यभयान्न तत्र तत्र पूर्ववल्लिखितम्।

३ प्रायशः कुरुते इति ख० ग० च।

गु०१ रगणः यगणः ल० गु०१ मगणः यगणः गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ ऽ

**मातुर्मनो हरन्त्येव दौर्लालित्योक्तिभिर्बालाः (१) ॥**

(१४९) ४ १३ १२८ १३ (१७)

इत्यादि ॥

## (१६४) पथ्या युजो ज् ॥ १४ ॥

चतुर्थादिति वर्त्तते। अत्र वक्त्रे 'युजः' पादस्य चतुर्थाद-क्षरादूर्द्ध्वं जकारः प्रयुज्यते, तद्वक्त्रं पथ्या नाम। यस्यापवादः। अत्रोदाहरणम्(२)।

गु०१ तगणः यगणः ल० गु०१ मगण जगणः ल०

ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ ऽ । ऽ । ।

**नित्यं नीति-निषण्णस्य राज्ञो राष्ट्रं (३) न सीदति।**

(१५३) ८ १३ १२८ (२०९) १३ ६५,१२८

ल०१ यगणः यगणः गु० गु०१ मगण जगणः गु०

। । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

**न हि पथ्याशिनः काये जायन्ते व्याधिवेदनाः (४) ॥**

१ २ १३ (२०) (८१) १३ ६४

---

१ अत्र प्रथमतृतीयपादयोः प्रथमाक्षरात्परं रगणोऽस्तीत्यत्र न निषेधोऽपितु द्वितीयचतुर्थपादयोरेव तन्निषेधः। अतो नानुष्टुब्लक्षणं यथोक्तमस्ति।

२ तत्रोदाहरणमिति ग०।

३ राज्यमिति ख०, ग०, पुस्तकान्तरपाठः।

४ अत्र वक्त्रलक्षणं पूर्वोक्तं वर्त्तते, पुनर्द्वितीयचतुर्थपादयोश्चतुर्थादक्षरात्परं यगणापवादको जगणोऽस्ति। अत इदं पथ्यावक्त्रनामकमनुष्टुप्छन्दो ज्ञेयम्। अस्यैव छन्दसि बहुशः प्रचारः। वक्त्रलक्षणे सगणनगणरगणानां सर्वत्रैव पूर्वोक्तनिषेधः, यगणस्य तु बाधकाभावसत्त्वात्तद्विधावस्थिरतेति मन्तव्यम्।

## (१३५) विपरीतैकीयम् ॥१५॥

उक्तलक्षणाद् विपरीतलक्षणा एकीयमते पथ्या भवति(१)।

यथा।

गु०१ यगण जगण गु० गु०१ मगण यगण गु०

ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । ऽ ऽ ऽ

भर्त्तुराज्ञानुवर्त्तिनी या स्त्री स्यात् सा स्थिरा लक्ष्मीः(२)।

२ १६ ६४।८३ १६ (१९)

गु०१ यगण जगण गु० ल०१ यगण यगण गु०

ऽ । ऽ ऽ । ऽ । ऽ । । ऽ ऽ । ऽ ऽ ऽ

स्वप्रभुत्वाभिमानिनी विपरीता परित्याज्या (३)॥

२ १६ ६४।८३। १२ १६ (२०)

## (१३६) चपलाऽयुजो न् ॥१६॥

अयुक्पादस्य यदा चतुर्थादूर्द्ध्व(४) नकारो भवति, युक्पादे

---

१ उक्तलक्षणाद्विपरीता पथ्या भवतीत्येकीयं मतम्। अयुक्पादे चतुर्थादक्षरात् परतो जकारः कर्त्तव्यः। युक्पादे य एवावतिष्ठते इति ख०। इयं पथ्या विपरीतया सह एकीभवति। अर्थात् अयुक्पादे चतुर्थादक्षरात परतो जकारः कर्त्तव्यः। युक्पादे य एवावतिष्ठते इति पुस्तकान्तरपाठः।

२ ग्टहे लक्ष्मीरिति ख०, ग० च।

३ अत्र पूर्वोक्तवक्त्रलक्षणं यथोक्तमस्ति, पुनरयुक्पादे चतुर्थादक्षरात परतो जगणोऽस्ति, युक्पादे यगणोऽस्ति. अत इदं विपरीतपथ्यावक्त्रनामकमनुष्टप्छन्दो बोध्यम। पूर्वलक्षणे अयुक्पादे चतुर्थाक्षरात्परं यकारस्थितिर्युक्पादे जगणावस्थितिरुक्ता, तद्वेवात्र वैपरीत्येन वर्त्तते।

४ चतुर्थादक्षरादूर्द्ध्वमिति ख०, ग० च।

य एवावतिष्ठते, तदा चपला नाम सानुष्टुब्वक्त्रं । अत्रोदाहरणम् ([1]) ।

गु०१ यगणः नगणः गु० गु०१ यगणः यगणः गु०

ऽ । ऽ ऽ । । । ऽ ऽ । ऽ ऽ । ऽ ऽ ऽ

**चीयमाणाग्रदशना वक्त्रनिर्म्मांसनासाग्रा ।**

२ (११५) १६ ३२ ६४ २ १६ (१९)

गु०१ यगणः नगणः गु० ल०१ यगण यगण गु०

ऽ । ऽ ऽ । । । ऽ । । ऽ ऽ । ऽ । ऽ

**कन्यका वाक्यचपला भवते([2])धूर्त्तसौभाग्यम् ([3]) ॥**

२ (११५) १६ ३२ ६४ १ २ १६ (२०)

## ([167]) विपुला युग्लः सप्तमः ॥ १७ ॥

अधिकारोऽयम् । य चतुर्थादित्यनेन सर्वत्र यकारे प्राप्ते ([4]) यदा युक्पादे सप्तमो वर्णो लघुर्भवति, तदा विपुला नाम ([5])। ननु पथ्यालक्षणान्तर्भूतत्वात्([6]) पुनरुक्तमेतत् । नैवं । विपुलावर्गस्येदानीमारभ्यमाणत्वात् तद्विनानुपपत्तेः । युक्पादे सप्तमेन

१ नवोदाहरणमिति ख० ।

२ लभते इति ख०, ग०, पुस्तकान्तरपाठश्च ।

३ अत्र पूर्वोक्तं वक्त्रलक्षणमस्ति, पुनरयुक्पादे चतुर्थादक्षरात्परं यगणापवादको नगणोस्ति,अत इदं चपलावक्त्रनामकमनुष्टुप्छन्दो ज्ञेयम् ।

४ यकारे कृते इति ख०, पुस्तकान्तरपाठश्च ।

५ नाम सानुष्टुबिति ख०, ग० च ।

६ पथ्यालक्षणे युक्पादे चतुर्थादक्षरात् परं जगणस्तिष्ठति, तथासति सप्तमो वर्णो लघुरेवायाति, अतः पथ्यालक्षणान्तर्भूतत्वमिति भावः

लघुनावश्यमेव भवितव्यम् । प्रथमतृतीययोश्चैतावता यकारस्यापवादः । तथा च वक्ष्यति, सर्व्वतः सैतवस्येत्यादिना । पथ्यायान्तु यकार एवावतिष्ठते ।

(१६८) सर्व्वतः सैतवस्य ॥ १८ ॥

'सैतवस्य' आचार्य्यस्य मतेन युक्पादेऽयुक्पादे च (१) सप्तमो लकार एव कर्त्तव्यः(२) । अत्रोदाहरणम्(३) ।

गु०१ जगणः ज०(ल०१।गु० गु०१ भगण ज०।लु०१ गु०
ऽ । ऽ । । ऽ । ऽ ऽ ऽ । । । ऽ । ऽ
सैतवेन पथार्णवं तीर्णो दशरथात्मजः ।
२ ८ १६ (६१ ६४ (६३ ४ ८ १६ ६४

गु०१ भगण ज०।ल०१ गु० ल०१ भगण ज० ल०१।गु०
ऽ ऽ । । । ऽ । ऽ । ऽ ऽ ऽ । ऽ । ऽ
रक्षः क्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना(४) ॥
(६७) ४ ८ १६ ६४ १ (८२) १६ ६४

---

१ मतेनायुक्पादेऽपीति पुस्तकान्तरपाठः ।

२ चतुर्षु पादेषु सप्तमवर्णस्य लघुत्वे स्थिरीभूते सर्वत्र चतुर्थादक्षरात् परं जगणतगणनगणभगणानामन्यतमस्य प्रयोगः कर्त्तव्य इति कथितम् । तथा सति सप्तमो वर्णो लघुरेवायास्यति इति भावः ।

३ तत्रोदाहरणमिति ख०, ग० च ।

४ अत्र वक्त्रलक्षणं वर्त्तते । पुनः प्रत्येकपादस्य चतुर्थादक्षरात् परं यगणापवादको जगणोऽस्ति, अत इदं जविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो ज्ञातव्यम् । अत्र जगणवाहुल्यात् जविपुलात्वं सप्तमवर्णस्य लघुत्वमप्युपपन्नं ।

## (१६९) भ्रौ न्तौ च ॥ १९ ॥

सर्व्वतः सैवतस्येति निवृत्तम्। चपलाऽयुजो नित्यस्माद्(१) अयुग्ग्रहणमनुवर्त्तते। विपुला युग्लः सप्तम इति सर्व्वमनुवर्त्तनीयम्(२)। अयुक्पादे यदा चतुर्थादक्षरात् परतो यकारं बाधित्वा भकाररेफनकारतकारा विकल्पेन भवन्ति, तदासौ विपुला नाम। तत्र भकारेण विपुलोदाहरणम्।

ल०१ रगणः भ०(ल०२)गु० ल०१ सगणः ज०(ल०२) गु०

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ । ऽ । ऽ

**इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी (३)।**

१ ४ ३२ ६४(१०२) १ १६ ६४ (८२)

गु०१ रगणः भ०(ल०२)गु०गु०१ जगण ज०(ल०२)गु०

ऽ । । ऽ ऽ । । ऽ ऽ । ऽ । । ऽ । ऽ

**इन्दीवराक्षी हृदयं दन्दहीति तथापि मे(४) ॥**

४ ३२६४(१०१) २ ८ १६ ६४(९१)

अयुज इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम्। व्यक्तिपक्षे

१ अयुजो नित्यतस्मादिति ख०. ग०. पुस्तकान्तरपाठश्च।

२ सर्व्वमनुवर्त्तत इति पुस्तकान्तरपाठः। अत्र विपुलावर्गे युक्पादे सप्तमवर्णो लघुरेव कर्त्तव्यः, अयुक्पादेतु तत्र वैकल्प्यमिति स्मर्त्तव्यम्। एतदर्थं युजोः पादयोः सर्व्वत्र अयुजोः कुत्रचिदेव सप्तमाक्षरोपरि स्थापितं (ल०२) एतच्चिह्नं तत्र तत्र द्रष्टव्यम्।

३ स्मितज्योत्स्नावभासिनीति ग०।

४ अत्र वक्त्रलक्षणं सर्व्वं वर्त्तते, पुनरयुक्पादे चतुर्थादक्षरात् परं यगणापवादको भगणोऽस्ति, अत इदं भविपुलापूर्व्वकं वक्त्रनामकमनुष्टुप्छन्दो बोध्यम्। अत्रायुक्पादे उभयत्र भगणस्य सत्त्वात् जातिपक्षीयं भविपुलोदाहरणमिदमिति विवेक्तव्यम्।

पुनरेकस्य। एकपक्षे पुनः प्रथमस्य तृतीयस्य वा। तथाच महाकवीनां प्रयोगाः।

ल०१ रगणः भगण· गु०गु०१ यगणः ज०(ल०७)गु०

। ऽ । ऽ ऽ । । ऽ ऽ । ऽ ऽ । ऽ । ऽ

**वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः।**

१ ४ (१०२) ३२६४ २ १६ ६४(८८)

गु०१ यगणः यगण· गु० गु०१ भगण ज०(ल०७)गु०

ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ । । । ऽ । ऽ

**पर्वते पर्वते रामः सर्वत्र मधुसूदनः(१)॥**

२ १६ (१८) ४ ८ १६ ६४(९३)

गु०१ भगण यगण· गु० गु०१ यगण ज०(ल०७)गु०

ऽ ऽ । । । ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ । ऽ

**देवः स जयति श्रीमान् दण्डधारो महीपतिः।**

४ ८ १६ (२९) २ १६ ६४ (८०)

गु०१ रगण· भ०(ल०७)गु० गु०१ जगण ज०(ल०७) ल०

ऽ ऽ । ऽ ऽ । । ऽ ऽ । ऽ । । ऽ । ।

**यस्य प्रसादाद्भुवनं शाश्वते पथि तिष्ठति(२)॥**

४ ३२ ६४(१०१) २ ६४ ८ १६ (११९)१२८

१,२, सर्वं गतो जनार्दन इति क. चिह्नितपुस्तकपाठस्तु न सम्यक्। तत्र युक्पादप्रथमाक्षरात्पर प्रतिषिद्धस्य रगणस्य वर्त्तमानत्वात्। अत्र वृत्तद्वये वक्त्रादिलक्षणमस्ति, पुनरेकस्य प्रथमे पादेऽपरस्य तृतीये चतुर्थादक्षरात् पर भगणो वर्त्तते। अत इदं भविपुलापूर्वक वक्त्रनामकमनुष्टुप्छन्दो भवति। अस्मिन् वृत्तद्वये प्रथमे तृतीये चायुक्पादे भगणस्य सत्त्वाद् व्यक्तिपक्षोयमिद भविपुलोदाहरणमिति ज्ञातव्यम्।

ल०१ रगणः भ०(ल०१) गु० ल०१ तगणः ज०(ल०१)गु०

| ऽ | ऽ ऽ | | ऽ | ऽ ऽ | | ऽ | ऽ

**उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता।**

१ ४ ३२ ६४(१०२) १ ८ १६ ६४ (९०)

गु०१ रगणः भ०(ल०१) गु० गु०१ तगणः ज०(ल०१)गु०

ऽ ऽ | ऽ ऽ | | ऽ ऽ ऽ ऽ | | ऽ | ऽ

**नारायणं स्तौमि सदा भक्तानां भयनाशनम्(१)॥**

४ ३२ ६४ १०१) ८ १६ ६४(८९)

इत्यादि। इदानीं रेफविपुलोदाहरणम्।

गु०१ रगणः रगणः गु० ल०१ भगणः ज०(ल०१)गु०

ऽ ऽ | ऽ ऽ | ऽ ऽ | ऽ | | | ऽ | ऽ

**लक्ष्मीपतिं लोकनाथं रथाङ्ग-धरमीश्वरम्(२)।**

४ ३२ (३७) १ ४ ८ १६ ६४(९४)

गु०१ रगणः रगणः गु० ल०१ यगणः ज०(ल०१) गु०

ऽ ऽ | ऽ ऽ | ऽ ऽ | | ऽ ऽ | ऽ | ऽ

**यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि त्रयीं तनुम्(३)॥**

४ ३२(३७) १ २ १६ ६४(८४)

अस्मिन्पक्षे प्रथमे पादे।

---

१ अत्र वक्त्रादिलक्षणं वर्त्तते, पुनः प्रथमतृतीययोरुभयोः पादयोश्चतुर्थादक्षरात्परं भगणोऽस्ति, अत इदं भविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो भवति। अस्मिन् वृत्ते प्रथमतृतीययोरुभयोरयुक्पादयोर्भगणस्य सत्त्वाज्जातिपर्य्यायमिदं भविपुलोदाहरणमिति ज्ञातव्यम्।

२ रथाङ्गधरमच्युतमिति ख०, ग० च।

३ प्रभजामि त्रयीं तनुमिति पुस्तकान्तरपाठः। अत्र वक्त्रादिलक्षणमस्ति, पुनरयुक्पादयोश्चतुर्थादक्षरात् परं रगणो वर्त्तते, अत इदं रविपुलापूर्वकं वक्त्रनामक-

ल०१ रगणः रगण गु० गु०१ मगण जं० ल०१)गु०

। ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ

महाकविं कालिदासं वन्दे वाग्देवतागुरुम्(१)।

१ ४ (३८) ३२ (८१) १६ ६४

ग०१ मगण यगणः ल० गु०१ जगणःज० ल०१)गु०

ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ । ऽ । ऽ । ऽ

यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिविम्बवत्(२)॥

(१४५) १६ १२८ २ ८ १६ ६४(९१)

तृतीये पादे ।

गु०१ यगण यगण गु० गु०१ नगण ज०।ल०१।गु०

ऽ । ऽ ऽ । ऽ ऽ ऽ । ऽ । । ऽ । ऽ

कामिनीभिः सहप्रीतिः कस्मै नाम(३) न रोचते ।

२ १६ (१९) (८९) ८ १६ ६४

ल०१ यगण रगण ल० गु०१ जगण ज०।ल०१।गु०

। । ऽ ऽ ऽ । ऽ । । । ऽ । । । ऽ । ऽ

यदि न स्याद्वारिवीचि-चञ्चलं हतजीवितम्(४)॥

१ २ (१६४) (३२) १२८ २ ८ १६ ६४(९१)

इदानीं नकार विपुलोदाहरणम् ।

---

मनुष्टुप्छन्दो भवति। अस्मिन् वृत्ते प्रथमतृतीययोरुभयोरपि पादयोश्चतुर्थाक्षरात् परं रगणस्य वर्त्तमानत्वाज्जातिपक्षीयमिदं रविपुलोदाहरणमिति बोध्यम्।

१ वागदेवतां गुरुमिति ख०. ग० च।

२ अत्र वक्त्रादिलक्षणमस्ति, पुन प्रथमे पादे चतुर्थादक्षरात् परं रगणो वर्त्तते. अत इदमपि रविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो भवति। अस्मिन् वृत्ते प्रथम एव एकस्मिन्नयुक्पादे चतुर्थादक्षरात्परं रगणस्य सत्त्वाद्व्यक्तिपक्षीयमिदं रविपुलोदाहरणमिति बोध्यम्।

३ कस्य नामेति ख०। कं वैनामेति ग०।

४ हन्त जीवितमिति ख०, पुस्तकान्तरपाठश्च। अत्र वक्त्रादिलक्षणमस्ति पुन

गु०१ रगणः नगणः गु० गु०१ यगणः जगणः(लु०७) गु०

ऽ ऽ । ऽ । । । ऽ ऽ । ऽ ऽ । ऽ । ऽ

**यस्या विभाति विपुला मन्मथस्थानपिण्डिका(१) ॥**

(११७) ४ १६ ३२ ६४ २ १६ ६४ (८३)

गु०१ यगणः नगणः गु० गु०१ तगण जगणः(लु०७) गु०

ऽ । ऽ ऽ । । । ऽ ऽ ऽ ऽ । । ऽ । ऽ

**या चतुःषष्टि-चतुरा सा स्त्री स्यान्नृपवल्लभा(२) ॥**

२ १६ ३२ ६४(११५) ८ १६ ६४(८९)

तथैव(३) भारविः।

लु०१ मगणः नगण गु० लु०१ तगण जगणः(लु०७) गु०

। ऽ ऽ ऽ । । । ऽ । ऽ ऽ । । । ऽ । ऽ

**युयुत्सेनेव कवचं किमामुक्तमिदं त्वया।**

१ (११) ४ १६ ३२ ६४ १ ८ १६ ६४(९०)

तृतीये पादे चतुर्थादक्षरात् परे रगणो वर्त्तते, अत इदमपि रविपुलापूर्वकमनुष्टुप्-छन्दो भवति। अस्मिन् इत्ते तृतीये एव एकस्मिन् अयुक्पादे रगणस्य सत्त्वाद्‌व्यक्ति-पर्य्यायमिदं रविपुलोदाहरणमिति ज्ञेयम्।

१ पाठिकेति ख०. पुस्तकान्तरपाठश्च।

२ स्त्रियाश्चतुःषष्टिगुणा भवन्तीति तेषु निपुणेति. ख० ग० पुस्तकान्तरपाठश्च। अत्र वक्त्रादिलक्षणमस्ति, पुनः प्रथमतृतीयपादयोश्चतुर्थादक्षरात् परं नगणो वर्त्तते, अत इदं नविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो भवति। अस्मिन् इत्ते उभयस्मिन्नयुक्पादे नगणस्य सत्त्वाज्जातिपर्य्यायमिदं नपुलोदाहरणमिति बोध्यम्। युयुत्सेनेवेत्यपि जातिपर्य्यायं नविपुलोदाहरणम्। अत्र युयुत्सेनेव इत्यत्र युयुत्सुनेव इति ख०, ग०, चिह्नितपुस्तकपाठः।

३ यथैवेति ख०, ग० पुस्तकान्तरपाठश्च।

ल०१ रगण. नगणः गु०गु०१ जगण. ज०(ल०७)गु०

| S | S | | | S S | S | | S | S

**तपस्विनो हि वसने केवलाजिनवल्कले ॥**

१ ४ १६ ३२६४(११८) २ ८ १६ ६४(९१)

व्यक्तिपक्षे कालिदासः ।

ल०१ मगण नगणः गु०गु०१ मगणः ज०(ल०१) गु०

| S S S | | | S S S S S | S | S

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।**

१ १६ ३२६४(११४) १६ ६४(८१)

गु०१ जगण. यगणः गु० गु०१ तगण जगण·(ल०७)गु०

S | S | | S S S S S S | | S | S

**तस्य धर्म्मरतेरासीद् वृद्धत्वं जरसा विना(१) ॥**

२ ८ १६ (२७) ८ १६ ६४(८९)

तथाच ।

ल०१ जगण· यगण. गु०गु०१ नगण ज०(ल०१) गु०

| | S | | S S S S S S | | S | S

**तव मन्त्रकृतो मन्त्रैर्दूरात् संशमितारिभिः ।**

१ २ ८ १६ (२८) ८ १६ ६४ ८९)

---

१ वक्त्रादिलक्षणयुक्तस्य नविपुलापूर्वकस्य वक्त्रनामकस्यास्यानुष्टुप्छन्दस एकस्मिन्नेव प्रथमे चायुक्पादे चतुर्थाद्वर्णात्परं नगणस्य विद्यमानत्वाद्व्यक्तिपक्षीय नविपुलोदाहरणमिदमिति बोध्यम् । तव मन्त्रेति वृत्तमपि व्यक्तिपक्षीयमेव ।

गु०१ मगणः नगणः गु०गु०१ जगणः जगणः(ल०७)गु०

ऽ ऽ ऽ ऽ । । । ऽ ऽ । ऽ । । ऽ । ऽ

**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥**

१६ १२६४(११७) २ ८ १६ ६४(९१)

इदानीं तकारविपुलोदाहरणम् ।

गु०१ मगणः तगणः गु०ल०१ भगणः ज०(ल०७)गु०

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ । । । ऽ । ऽ

**वन्दे देवं[१] सोमेश्वरं जटामुकुटमण्डितम् ।**

(६५) ६४ १ ४ ८१६ ६४(९४)

गु०१ भगणः तगणः गु०ल०१ भगणः ज०(ल०७) गु०

ऽ ऽ । । ऽ ऽ । ऽ । ऽ । । । । ऽ । ऽ

**खट्वाङ्गधरं चन्द्रमःशिखामणिविभूषितम्[२] ॥**

४ ८(७७) ६४ १ ४ ८ १६ ६४(९४)

व्यक्तिपक्षे ।

गु०१ रगणः तगणः गु० गु०१ जगणः ज०(ल०७) गु०

ऽ ऽ । ऽ ऽ ऽ । ऽ ऽ । ऽ । । ऽ । ऽ

**वन्दे कविं श्रीभारविं लोकसन्तमसच्छिदम् ।**

४ ६४(६९) २ ८१६ ६४(९१)

---

१ देवदेवमिति क० ।

२ खट्वाङ्गधरं शङ्करं चन्द्ररेखाशिखामणिमिति ख० । पुस्तकान्तरपाठश्च । वक्त्रादिलक्षणयुक्तस्य तविपुलापूर्वकस्य वक्त्रनामकस्यानुष्टुप्छन्दसोऽस्योभयोरप्ययुक्पादयोस्तगणस्य सत्त्वाज्जातिपक्षेऽयं तविपुलोदाहरणमिदमिति ज्ञातव्यम् ।

ल०१ मगणः यगण· ल० गु०१ तगणः ज०(ल०७)गु०

। ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ ऽ । । ऽ । ऽ

दिवादीपा इवाभान्ति यस्याग्रे कवयोऽपरे(१) ॥

१ ५६(१४६) १२८ ८१६ ६४(८९)

तथान्येषामपि प्रयोगः ।

गु०१ जगण यगण गु० गु०१ यगण ज०(ल०७)गु०

ऽ । ऽ । । ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ । ऽ

लोकवत् प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।

२ ८ १६ (२७) २ १६ ६४(८६)

गु०१ भगण तगण ल०ल०१ यगण· ज०(ल०७)गु०

ऽ ऽ । । ऽ ऽ । । । । ऽ ऽ । ऽ । ऽ

लोकव्यवहारं प्रति सदृशौ बालपण्डितौ(२) ॥

४ ८(२०५) ६४१२८ १ २ १६ ६४(८४)

इदानीं चकाराकृष्टं मकारविपुलोदाहरणम् ।

गु०१ रगण मगण· गु० गु०१ यगण ज०(ल०७)गु०१

ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ । ऽ

सर्वातिरिक्तं लावण्यं बिभ्रती चारुविभ्रमा ।

४ (५) २ (८३)१६ ६४

---

१ वक्त्रादिलक्षणविशिष्टस्य तविपुलापूर्वकस्य वक्त्रनामकस्यानुष्टुप्छन्दसो-ऽस्यैकस्मिन्नेव प्रथमे ऽयुक्पादे तगणस्य सत्त्वाद्वक्त्रपथ्यीय तविपुलोदाहरणमिदमिति ज्ञातव्यम् । लोकवदितिपद्यस्य तृतीये एव पादे तगणस्य सत्त्वात्तदपि वक्त्रपथ्यीयं तपुविपु-लोदाहरणमिति बोध्यम् ।

२ वक्त्रादिलक्षणयुक्तस्य तविपुलापूर्वस्य वक्त्रनामकस्यानुष्टुप्छन्दसोऽस्य एकस्मिन्नेव तृतीयेऽयुक्पादे तगणस्य वर्तमानत्वाद्वक्त्रपथ्यीयं तविपुलोदाहरणमिदमिति बोध्यम् ।

गु०१ रगणः मगणः ल० गु०१ मगणः ज०(ल०७)गु०

S S I S S S S I S S S S I S I S

**स्त्रीलोकदृष्टिस्त्वन्यैव निःसामान्यस्य वेधसः(१) ॥**

४ (१३६) १२८ (८५) १६ ६४

व्यक्तिपक्षे श्रीकालिदासः ।

ल०१ रगणः मगणः गु० ल०१ यगणः ज०(ल०७)गु०

I S I S S S S S I I S S I S I S

**मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।**

१ ४ (६) १ २ (८४) १६ ६४

गु०१ यगणः यगणः गु० ल०१ मगणः जगणः(ल०७) गु०

S I S S I S S S I S S S I S I S

**षड्जसंवादिनीः केका द्विधाभिन्नाः शिखण्डिभिः(२) ॥**

२ १६ (१९) १ (८७) १६ ६४

ल०१ रगणः मगणः गु० गु०१ तगणः जगणः(ल०७)गु०

I S I S S S S S S S S I I S I S

**अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम् ।**

१ ४ (६) (८९) ८ १६ ६४

---

१ वक्त्रादिलक्षणयुक्तस्य मविपुलापूर्वकस्य वक्त्रनामकस्यानुष्टुप्छन्दसोऽस्योभयस्मिन्नेवायुक्पादे मगणस्य वर्त्तमानत्वाज्जातिपक्षीय मविपुलोदाहरणमिदमिति बोध्यम् ।

२ वक्त्रादिलक्षणयुक्तस्य मविपुलापूर्वकस्य वक्त्रनामकस्यानुष्टुप्छन्दसोऽस्य एकस्मिन्नेव प्रथमे अयुक्पादे मगणस्य सत्त्वाद्व्यक्तिपक्षीयं मविपुलोदाहरणमिदमिति बोध्यम् । अथ प्रदोष इतिश्लोकमप्येतादृशमेव । अदूरवर्त्तिनीं, श्लाघ्यस्त्याग इतिश्लोकद्वयस्य तृतीयपादे एव चतुर्थादक्षरात् परं मगणस्य सत्त्वात्तदपि व्यक्तिपक्षीयं वक्त्रादिलक्षणयुक्तं मविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो भवति ।

गु०१ तगणः यगणः गु० ल०१ यगणः जगणः(ल०७)गु०

S S S I I S S S I I S S I S I S

सूनुः सूनृतवाक् स्रष्टुर्विससर्जोर्जितश्रियम् ॥

८ १. (७५) १ २ १६(८४)६४

तृतीयपादे ।

ल०१ रगण. यगण गु० गु०१ भगणः जगण.(ल०७)गु०

I S I S I S S S S S I I I S I S

अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः ।

१ ४ १६ (५२) (८०) ८४ १६ ६४

ल०१ रगण मगण गु० गु०१ जगण ज० ल०१ गु०

I S I S S S S S I S I I S I S

उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥

१ ४ (६) २ (६१) ८ १६ ६४

गु०१ मगण. यगण. गु० गु०१ मगण ज०(ल०७)गु०

S S S S I S S S S S S S I S I S

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।

१६ (१७) (८१) १६ ६४

ल०१ रगण. मगण. गु० गु०१ यगणः जगण.(ल०७)गु०

I S I S S S S S S I S S I S I S

अनन्यजानेस्तस्यासीत् सैव जाया हिरण्मयी ॥

१ ४ (६) २ (८२) १६ ६४

सकारेणापि क्वचिद्विपुला दृश्यते । यथा,

ल०१ भगणः यगणः गु० ल०१ तगणः ज०(ल०७)गु०

I S I I I S S S I S S I I S I S

जिते तु(१) लभते लक्ष्मीं मृते चापि वराङ्गना।

१ ४ ८१६ (३०) १ (६०) ८ १६ ६४

ल०१ यगणः मगणः गु० गु०१ तगणः ज०(ल०७)गु०

I I S S I I S S S S S I I S I S

क्षणविध्वंसिनि काये(२) का चिन्ता मरणे रणे॥

१ २ १६ ३२ (५२) (८६) ८१६ ६४

सङ्कीर्णाश्च विपुलाप्रकारा दृश्यन्ते। तथा च भारविणोक्तम्।

ल०१ मगणः नगणः गु० ल०१ यगणः ज०(ल०७)गु०

I S S S I I I S I I S S I S I S

क्वचित्काले प्रसरता क्वचिदापत्य विघ्नता(३)॥

१ ११४) १६ ३२ ६४ १ २(८४) १६ ६४

ल०१ रगणः भगणः गु० ल०१ मगणः ज० ल०७) गु०

I S I S S I I S I S S S I S I S

प्रागेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम्(४)॥

१ ४(१०२) ३२ ६४ १ (८२) १६ ६४

---

१ जितेनेति पुस्तकान्तरपाठः।

२ क्षणविध्वंसिनी कायेति ख०, पुस्तकान्तरपाठश्च। अत्र सविपुलात्वव्याघातान्नैष पाठः समादरणीयः। एतस्मिन् तृतीये पादे एव चतुर्थादक्षरात्पर सगणस्य सत्वाद्व्यक्तिपञ्चीय वक्त्रादिलक्षणयुक्तं सविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दो भवतीदं।

३ निघ्नतेति ख०, पुस्तकान्तरपाठश्च।

४ प्रथमे एवायुक्पादे चतुर्थादक्षरात्परं नगणस्य सत्वाद्व्यक्तिपञ्चीय नविपुलोदा-

इत्यादयो विपुलाविकल्पाः सङ्कीर्णाश्चानुकोटिशः काव्येषु दृश्यन्ते। सर्व्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नाय।

(१६९) प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्द्ध्वम् ॥१९॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः। अनुष्टुभः पादादूर्द्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या (१) यद्वृत्तं निष्पद्यते तत् पदचतुरूर्द्ध्वं नाम। तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
तस्याः कटाक्षविक्षेपैः कम्पिततनुकुटिलैरतिदीर्घैः।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
तक्षकदष्ट इवेन्द्रियशून्यः क्षतचैतन्यः
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
पदचतुरूर्द्ध्वं न चलति पुरुषः पतति सहसैव ॥

अत्र गुरुलघुविभागो नेष्यते।

---

हरणमिदं। पुनस्तृतीये एवाष्टकपादे तस्मात् परं भगणस्य सत्त्वाद्व्यक्तिपक्षीय भविपुलोदाहरणमिदं भवति। एवं चेत् नभविपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्द इदमित्यस्य नामनिर्देशः कर्त्तव्यः। गणद्वयघटितविपुलावत्त्वात्सङ्कीर्णविपुलेयम्।

१ वृद्धिः कर्त्तव्येतिवचनसामर्थ्यात् प्रथमे पादे वृद्धिर्न प्रसज्यते, अपितु द्वितीयादावेव। तथाच प्रथमः पाद आनुष्टुभोऽष्टाक्षर एव स्थापनीयः। द्वितीये पादेऽष्टाक्षरेभ्य ऊर्द्ध्वं चतुरक्षरवृद्धिः कर्त्तव्या, तृतीये द्वादशाक्षरेभ्यः परं, चतुर्थे षोडशाक्षरेभ्यः परतश्च। एतज्ज्ञापनार्थं तत्र तत्र पदचतुरूर्द्ध्वस्यात्युदाहरणशिरसि कृताङ्कविन्यासस्याष्टद्वादशषोडशाङ्केभ्यः परं पुनरेकादिचतुर्णामङ्कानाम् इति द्रष्टव्या। अस्य चतुर्णां पादानां वैषम्याद्विषमवृत्तमिदम्।

(१७०) गावन्त आपीडः ॥ २० ॥

गकारौ द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां(१), तत् पदचतुरूर्द्ध्वमापीडसञ्ज्ञकं भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे। तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
कुसुमितसहकारे, हतहिममहिमशुचिशशाङ्के।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
विकसितकमलसरसि मधुसमयेऽस्मिन्,

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
प्रवससि पथिक हतक यदि भवति तव विपत्तिः(२) ॥

(१७१) आदौ चेत्(३) प्रत्यापीडः ॥२१॥

गकारौ द्वौ आदौ चेद्भवतश्चतुर्णां(४) पादानां, तदा तत् पदचतुरूर्द्ध्वं प्रत्यापीडसञ्ज्ञं भवति। अत्रापि पूर्ववत् शेषाणां लघुत्वमेव। तत्रोदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
चित्तं मम रमयति, कान्तं वनमिदमुपगिरिनदि।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
कूजन्मधुकरकलरवकृत-जनधृति,

१ चतुर्णामपि पादानामन्ते द्वौ गकारौ चेद्भवत इति ग,चिह्नितपुस्तकपाठक्रमः।

२ अत्र पदचतुरूर्द्ध्वलक्षणं वर्त्तते, पुनः प्रतिपादान्ते द्वौ गुरू अन्ये लघवः सन्ति, अत इदमापीडनामकं पदचतुरूर्द्ध्वं छन्दो ज्ञेयम्।

३ गावादौ चेदिति क, चिह्नितपुस्तकधृतसन्दिग्धपाठान्तरम्।

४ चतुर्णामपीति ख० ग० च।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
पुंस्कोकिलमुखरितसुरभिकुसुमचितनतनति[१] ॥

(१०२) प्रत्यापीडो गावादौ च ॥२२॥

चकारोऽन्त इति समुच्चयार्थः । तस्यैव पदचतुरूर्ध्वस्यान्ते आदौ च यदि गकारौ भवतस्तदा प्रत्यापीड एव भवति[२] । तत्रोदाहरणम् ।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
कान्तावदनसरोजं, हृद्यं घनसुरभि मधुरसाढ्यम् ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
पातुं रहसि सततमभिलषति मनो मे,
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
किञ्चिन्मुकुलितनयनमविरतमणितरमणीयम्[३] ॥

तदेवं द्विप्रकारः प्रत्यापीडो भवति ।

(१०३) प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः ॥२३॥

आपीडग्रहणं निवृत्तम् । तेनैव समं लध्वक्षराभ्यनुज्ञानञ्च ।

१ अत्र पदचतुरूर्ध्वं लक्षणमस्ति, पुन प्रत्येकपादादौ द्वौ गुरू, इतरे लघवः सन्ति, अत इदं प्रत्यापीडनामकं पदचतुरूर्ध्वं छन्दो ज्ञेयम् ।

२ तदा तदपि प्रत्यापीडो भवतीति ग० ।

३ अत्र पदचतुरूर्ध्वं लक्षणमस्ति, पुनः प्रत्येकपादस्यादावन्ते च द्वौ द्वौ गुरू, मध्ये लघवश्च सन्ति । अत एवेदमपरप्रकारकं प्रत्यापीडनामकं पदचतुरूर्ध्वं छन्दो विज्ञेयम् ।

तदेव पट्चतुरूर्द्ध्वं प्रथमस्य(१) विपर्य्यासे मञ्जरीलवल्यमृतधाराभिधानं भवति। प्रथमस्य पादस्य द्वितीयेन विपर्य्यासे मञ्जरी। प्रथमस्य तृतीयेन विपर्य्यासे लवली। प्रथमस्य चतुर्थेन विपर्य्यासेऽमृतधारा। तत्र मञ्जर्य्युदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ १ २ ३ ४ ५ ६ ७ ८
जनयति महतीं प्रीतिं हृदये, कामिनां चूतमञ्जरी।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
मिलदलिचक्रचञ्चुपरिचुम्बितकेसरा,

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
कोमलमलयवातपरिनर्त्तिततरुशिखरस्थिता(२)॥

लवल्युदाहरणम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४ १ २ ३ ४ ५ ६
विरहविधुरतरुणकाङ्गनाकपोलोपमं, परिणतिधरं

७ ८ १ २ ३ ४
पीतपाण्डुच्छवि(३)।

१ प्रथमस्य पादस्येति पुस्तकान्तरपाठः।

२ तरुशिरसि स्थितेति ग०। अत्र पट्चतुरूर्द्ध्वलक्षणवन्तः पादाः सन्ति, पुन पट्चतुरूर्द्ध्वस्याष्टाक्षरः प्रथमः पादोऽत्र द्वितीयः, पुनस्तस्य द्वादशाक्षरो द्वितीय पादोऽत्र प्रथमः। इत्थं प्रथमस्य पादस्य द्वितीयेन सहात्र विनिमयोऽस्ति, तृतीय चतुर्थपादौ तु पट्चतुरूर्द्ध्ववदत्रापि वर्त्तेते। अत इदं पट्चतुरूर्द्ध्वं मञ्जरीनामा छन्दो भवति।

३ तरुणकान्ताकपोलावदातपरिणति अरुणपीतपाण्डुच्छवीति ग०।

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
लवलीफलं निदाघे, भवति जगति हिमकरशीतलमति-
१६ १ २ ३ ४
स्वादृष्णाहरम्(१) ॥

अमृतधारोदाहरणम् ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
परिवाञ्छसि(२) कर्णरसायनं सततममृतधाराभिः,
१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
यदि हृदि वा परमानन्दरसं ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
चेतः पूरण धरणीधर वाणीममृतमयीं,
१ २ ३ ४ ५ ६ ७ ८
तत्काव्यगुणभूषणम्(३) ॥

केचिदापीडादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामा-नीच्छन्ति ।

इति पदचतुरूर्द्धाधिकारः ॥

१ शीतल खण्डवदतिस्वादु तृष्णाहरमिति ग० ।

अस्य पदचतुरूर्द्धलक्षणयुक्ता पादाः सन्ति, पुनः पदचतुरूर्द्धस्य षोडशाक्षर-स्तृतीयः पादोऽत्र प्रथमः, अष्टाक्षरस्तस्य प्रथमः पादोऽत्र तृतीयः । इत्थं प्रथमस्य पादस्य तृतीयेन सह विनिमयो वर्त्तते । द्वितीयचतुर्थौ तु यथोक्तस्थानवर्त्तिनौ स्तः, अत इदं पदचतुरूर्द्ध लवलीनामकं छन्दो ज्ञेयम् ।

२ यदि वाञ्छसीति ख०, ग०, पुस्तकान्तरपाठश्च ।

३ अत्र चतुरूर्द्धलक्षणयुक्ताः पादाः सन्ति, पुनर्विंशत्यक्षरः पदचतुरूर्द्धस्य

## (१७४) उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग् ॥ २४ ॥

पाद इति प्रकृतमनुवर्त्तते । यत्र प्रथमे पादे सकारजकारसकारलकारैर्दशाक्षराणि भवन्ति । द्वितीये पादे नकारसकारजकारगकारैर्दशैव । तृतीयपादे भकारनकारजकारलकारगकारैरेकादशैव । चतुर्थे पादे सकारजकारसकारजकारगकारैस्त्रयोदशैव । तद्वृत्तमुद्गता नाम । तत्रोदाहरणम् ।

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

। । ऽ । ऽ । । । ऽ । । । । । । ऽ । ऽ । ऽ

मृगलोचना शशिमुखी च रुचिरदशना नितम्बिनी ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० १ २ ३ ४ ५ ६ ७ ८ ९ १०

भगण. नगण जगण ल०गु० सगणः जगणः सगण· जगणः गु०

ऽ । । । । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

हंसललितगमना ललना, परिणीयते यदि भवेत्कुलोद्गता[1]॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३

---

चतुर्थपादोऽत्र प्रथमः, अष्टाक्षरस्तस्य प्रथमः पादोऽत्र चतुर्थः, इत्थं प्रथमस्य चतुर्थेन सह विनिमयो वर्त्तते, द्वितीयतृतीयौ तु यथोक्तस्थानस्थौ स्तः, अत इदं पदचतुरूर्द्ध मङ्गलधारानामकं छन्दो बोध्यम् ।

१ अत्र प्रतिपादं क्लाः सगणादय उपरि विन्यस्ताः । प्रत्येकपादाक्षरसङ्ख्याश्चिह्नैरेकाद्याङ्का अधो निवेशिताः । यत्रैकमः पुनरारम्भो दृश्यते तत्पूर्वाक्षरे पादसमाप्तिर्ज्ञातव्या । विषमस्थमिदमक्षरतो गणतश्चातः परत्र सर्वत्र तज्ज्ञेयम् । अस्योद्गताच्छन्दसश्चत्वारः पादा दशैकादशत्रयोदशाक्षरप्रस्तारस्य भेदविशेषा बोद्धव्याः । कः कतमो भेद इति तूद्दिष्टक्रियया अनुष्टुब्वृत्तवत् ज्ञातव्यं सर्वत्र । पादसङ्ख्याबोध-

यत्र सूत्रे गकारो लकारो वा श्रूयते, तत्र तेनैव वृत्तस्य पादः समाप्यते। उद्गतामिति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्य्यम्। एकत इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थः। उपस्थितप्रचुपितं वृत्तगाद्यमित्यतः सिंहावलोकितन्यायेनाद्यग्रहणमनुवर्त्तनीयम्(१)। तेनाद्यमेव पादमेकतः पठेत्। एकत इति ल्यब्लोपे पञ्चमी॥

(१७५) तृतीयस्य सौरभकं नौ भगौ॥ २५॥

तृतीयस्येति ग्रहणात्तस्या उद्गताया एव अन्ये त्रयः पादा गृह्यन्ते। तृतीयपादे तु विशेषः। तृतीये पादे रेफनकारभकारगकारैर्दशाक्षराणि भवन्ति(२), तत् सौरभकं नाम। तत्रोदाहरणम्।

सगण जगणः सगण ल० नगण सगण जगणः ग०

। । ऽ । । ऽ । । । ऽ । । । । । । । ऽ । ऽ । ऽ

विनिवारितोपि नयनेन, तदपि किमिहागतो भवान्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० १ २ ३ ४ ५ ६ ७ ८ ९ १०

रगणः नगणः भगण ग० सगणः जगणः सगण जगण ग०

ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

एतदेव तव सौरभकं, यदुदीरितार्थमपि नावबुध्यते(३)॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३

---

काकुविन्यासेन स्थानाभावादुद्दिष्टाङ्का मात्रान्यपि न्यस्ताः। अत्र स्जौ स्लौ इति वाक्यच्छिन्नत्वो चेत्यत्र चक रस्य गन्ते इति गुरुत्वं न भवति।

१ आद्यग्रहणमनुवर्त्तते इति ख०, पुस्तकान्तरपाठश्च।

२ उद्गतायां यदा तृतीये पादे रगणनगणभगणगा इत्येते भवन्तीति ग०।

३ नावबुध्यसे इति ग० पुस्तकान्तरपाठश्च। अत्र तृतीयपादवर्जिता अन्ये पादा

## (१७६) ललितं नौ सौ ॥ २६ ॥

तस्या एवोद्गतायास्तृतीयपादस्थाने यदा नो सौ भवतस्तदा ललितं नाम वृत्तम्(१)। तत्रोदाहरणम् ।

सगणः जगणः सगणः ल० नगणः सगणः जगणः गु०

I I S I S I I I S I I I I I I I S I S I S

सततं प्रियम्बदमनूनममलहृदय गुणोत्तरम्(२) ।

१ २ ३ ४ ५ ६ ७ ८ ९ १० १ २ ३ ४ ५ ६ ७ ८ ९ १०

नगणः नगणः सगणः सगणः सगणः जगणः सगणः

I I I I I I I I S I I S I I S I S I I S

सुललितमतिकमनीयतनुं, पुरुषं त्यजन्ति न तु जा-

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४ ५ ६ ७ ८ ९

जगणः गु०

I S I S

तु योषितः(३) ॥

१० ११ १२ १३

---

उद्गतालक्षणाक्रान्ता, तृतीयम् रगणनगणभगणगुरुभिरुपेतः। अत इदं सौरभकं नाम छन्दो बोध्यम् ।

१ ललित नाम छन्द इति ग० ।

२ गुणोन्नतमिति ग० ।

३ अत्र तृतीयपादरहिता अन्ये पादा उद्गतालक्षणाक्रान्ताः, तृतीयपादश्च ननस-सैरुपेतोऽस्ति, अत इदं ललितनामकं छन्दो बोध्यम् ।

(१००) उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ ॥ २७ ॥

यत्र प्रथमे पादे मकारसकारजकारभकारा गकारौ च भवतः, द्वितीये सकारनकारजकाररेफा गकारश्च, तृतीये नकारौ सकारश्च, चतुर्थे त्रयो नकारा जकारयकारौ च(१), तदुपस्थितप्रचुपितं नाम वृत्तं भवति। तत्रोदाहरणम् ।

मगणः सगणः जगणः भगणः गु० गु० सगणः नगणः

S S S I I S I S I S I I S S I I S I I I

रामाकामकरेणुका(२) मृगायतनेत्रा, हृदयं हरति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १ २ ३ ४ ५ ६

जगणः रगणः गु०

I S I S I S S

पयोधरावनम्रा ।

७ ८ ९ १० ११ १२ १३

नगणः नगणः सगणः नगणः नगणः नगणः जगणः यगणः

I I I I I I I I S I I I I I I I I I I S I I S S

इयमतिशयसुभगा, बहुविधनिधुवनकुशला ललिताङ्गी ॥

१ २ ३ ४ ५ ६ ७ ८ ९ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

---

१ यत्र प्रथमे पादे मगणसगणजगणभगणा गकारौ च भवतो द्वितीये सगणनगणजगणरगणा मकारश्च तृतीये नगणौ सगणश्च चतुर्थे त्रयो नगणा जगणयगणौ चेति ग०।

२ कामबलूरिकेति ख०, पुस्तकान्तरपाठश्च। कामकरेणुकेति ग०।

पृथगाद्यमिति उद्गतामेकत. पठेदित्यनुवृत्तिनिरासार्थम्(१) । अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात् ॥

(१०८) **वर्द्धमानं नौ स्नौ न्सौ ॥२८॥**

तृतीयस्येति वर्त्तते(२) । तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ सकारनकारौ पुनर्नकारसकारौ(३) च भवतस्तदा वर्द्धमानं नाम वृत्तं भवति । तत्रोदाहरणम् ।

मगण. मगण. जगण: भगण: ग० ग०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ

**बिम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी**

सगण: नगण जगण. रगण ग०

। । ऽ । । । । ऽ । ऽ । ऽ ऽ

**हरिणीशिशुनयना नितम्बगुर्व्वी ।**

नगण. नगण: सगण. नगण नगण: सगण·

। । । । । । । । ऽ । । । । । । । । ऽ

**मदकलकरिगमना परिणतशशिवदना**

नगण: नगण नगण. जगण· यगण:

। । । । । । । । । । ऽ । । ऽ ऽ

**जनयति मम मनसि मुदं मदिराक्षी(४) ॥**

---

१ पठेदित्यनुवृत्तिशङ्कानिरासार्थमिति ख०, ग०, पुस्तकान्तरपाठश्च।

२ तृतीयस्येत्यनुवर्त्तत इति ग० ।

३ यदा नगणौ सगणनगणौ नगणसगणाविति ग० ।

४ अस्य तृतीयपादभिन्ना अन्ये पादा उपस्थितप्रचुपितलक्षणाक्रान्ताः, तृतीय-

## (१७९) शुद्धविराडृषभं त्ज्राः ॥ २९ ॥

तस्मिन्नेव(१) उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकारजकाररेफा(२) भवन्ति, तदा शुद्धविराडृषभं नाम वृत्तं भवति । तत्रोदाहरणम् ।

मगण मगणः जगण भगणः गु० गु०

ऽ ऽ ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ

कन्येयं कनकोज्ज्वला मनोहरदीप्तिः(३)

मगण नगण जगण रगण गु०

। । ऽ । । । । ऽ । ऽ । ऽ ऽ

शशिनिर्म्मलवदना विशालनेत्रा ।

तगण जगण रगण

ऽ ऽ । । ऽ । ऽ । ऽ

पीनोरुनितम्बशालिनी

नगण नगणः नगणः जगणः यगण

। । । । । । । । । । । ऽ । । ऽ ऽ

सुखयति हृदयमतिशयं तरुणानाम्(४) ॥

---

पादस्तु ननसननसयुक्तोऽस्ति, अत इद वर्द्धमान नाम छन्दो भवति । अतएतो गच्छतश्च विषमवृत्तमिदम् ।

१ तस्मिन्नेवेति म० ।

२ तभजजभजरगणा इति ग० ।

३ मनोहरमूर्त्तिरिति ख०, म०, पुस्तकान्तरपाठश्च ।

४ अत्र तृतीयाख्यपादा उपस्थितप्रचुपितलक्षणाक्रान्ताः, तृतीयस्तु तजर

उपस्थितप्रचुपितादीनामस्मिन् प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः।

(१८०) अर्द्धे ॥ ३० ॥

पूर्व्वऽमुच्चावचानि च्छन्दांस्युक्तानि इदानीं नियमेनोच्यन्ते। अर्द्ध इत्यधिकारोऽयमाध्यायपरिसमाप्तेः, यदित ऊर्द्ध्वमनुक्रमिष्यामः, अर्द्धे एव(१) तद्वेदितव्यम् ॥

(१८१) उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ॥ ३१ ॥

यस्य प्रथमे पादे सकारास्त्रयो लकारगकारौ च क्रमेण, द्वितीये भकारास्त्रयो गकारौ च भवतस्तदुपचित्रकं नाम वृत्तम्। अर्द्धशब्दस्य समप्रविभागवचनत्वाद् द्वितीयमपि अर्द्धं तादृशमेव ॥ तत्रोदाहरणम्।

सगण सगणः सगणः ल० गु० भगणः भगणः भगणः गु० गु०

। । ऽ । । ऽ । । ऽ । ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

उपचित्रकमत्र विराजते, चूतवनं कुसुमैर्विकसद्भिः।

सगणः सगणः सगणः ल० गु० भगणः भगणः भगणः ल० गु०

। । ऽ । । ऽ । । ऽ । ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

परपुष्टविघुष्टमनोहरं, मन्मथकेलिनिकेतनमेतत्(२) ॥

---

गणयुक्तोऽस्ति, अत इदं शुद्धविराडृषभनामकं छन्दो बोध्यम्। अथ-पादवर्ण-वैषम्याद्विषमवृत्तमिदम्।

१ अर्द्ध इत्येवेति ख०, पुस्तकान्तरपाठश्च।

२ अस्य प्रथमार्द्धतुल्यं द्वितीयार्द्धम्। पुनः प्रथमपादवत् तृतीयपादो द्वितीयपादव-

## (१८१) द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ ॥ ३२ ॥

यस्य प्रथमे पादे त्रयो भकारा गकारौ च, द्वितीये नकारजकारौ जकारयकारौ च[1] तद् द्रुतमध्या नाम वृत्तम्[2]। अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ[3] ॥ तत्रोदाहरणम् ।

भगणः भगणः भगणः गु० गु० नगण जगण जगणः यगणः

S I I S I I S I I S S I I I I S I I S I I S S

यद्यपि शीघ्रगतिर्मृदुगामी, बहुधनवानपि दुःखमुपैति ।

भगणः भगणः भगणः गु० गु० नगण जगणः जगण यगणः

S I I S I I S I I S S I I I I S I I S I I S S

नातिशयत्वरिता न च मन्दा, नृपतिगतिः कथिता द्रुतमध्या[4]॥

---

चतुर्थपादः पतितोऽस्ति। तस्मादेतदुपचित्रकनामकं छन्दो भवति। अत्र प्रथमतृतीययोर्द्वितीयचतुर्थयोः पादयोः साम्यादर्द्धसमवृत्तमिदम्। अत एवार्द्धसमवृत्ताधिकारे 'विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रमिति छन्दोमञ्जरीवृत्तरत्नाकरयोरुक्तम् ।

१ त्रयो भगणा गकारौ च भवतः, द्वितीये नगणजगणौ जगणो यगणश्चेति ग०। त्रयो भकारा गकारौ च द्वितीये नकारजकारौ ज्युतौ भवत इति ख० ।

२ वृत्तं भवतीति ख०, पुस्तकान्तरपाठश्च ।

३ तत्रापि प्रथमतृतीयौ द्वितीयचतुर्थौ च पादौ सदृशौ भवत इति ग० ।
प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ भवत इति ख० ।

४ अत्र दुःखमुपैतीत्यत्र 'ति' इति वर्णस्य पादान्तत्वप्राप्तगुरुत्वमाश्रित्यैव यगणनिर्वाहः। अक्षरतो गणतश्च प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पादयोरैक्यादर्द्धसमवृत्तमिदम्। भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्युतौ द्रुतमध्येति वृत्तरत्नाकरम् ।

(१८३) वेगवती सौ स्गौ, भौ भ्गौ ग् ॥ ३३ ॥

यस्य प्रथमे पादे त्रयः सकारा गकारश्चैकः, द्वितीये भकारास्त्रयो(१) गकारौ च भवतः, तद्वेगवती नाम वृत्तम् । तत्रोदाहरणम् ।

सगणः सगणः सगणः गु० भगणः भगणः भगणः गु०गु०

। । ऽ । । ऽ । । । । ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

तव पुञ्ज(२)नराधिप सेनां,वेगवतीं सहते समरेषु ।

सगणः सगणः सगणः गु० भगणः भगणः भगणः गु०गु०

। । ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

प्रलयोर्म्मिमिवाभिमुखीं तां, कः सकलक्षितिभृन्निवहेषु(३) ॥

(१८४) भद्रविराट् त्जौ गौँ, म्सौ ज्गौ ग् ॥३४॥

यस्य प्रथमे पादे तकारजकारौ रेफगकारौ च, द्वितीये मकारसकारजकारा(४) गकारौ च, तद्भद्रविराट्(५) नाम ॥ तत्रोदाहरणम् ।

---

१ त्रयः सगणा गकारश्चैको द्वितीये भगणास्त्रय इति ग० ।

२ तव मुञ्जेति ख०, ग० च ।

३ अत्र समरेषु, निवहेषु, इत्युभयत्र पादान्तस्य लघोर्गुरुत्वातिदेशाद्गुरोर्लाभः । अस्यापि गणाक्षरतः प्रथमतृतीययोर्द्वितीयचतुर्थयोः पादयोः साम्यादर्द्धसमवृत्तमिदम् । अत एवार्द्धसमवृत्ताधिकारे, 'विषमे प्रथमाक्षरहीन दोधकमेव हि वेगवती स्यादिति छन्दोमञ्जर्यां, सयुगात्सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गाविति वृत्तरत्नाकरे च पठितं ।

४ तगणजगणौ रगणगकारौ च द्वितीये मगणसगणजगणा इति ग० ।

५ भवतस्तद्वृत्तं भद्रविराट् समस्तुतेषाविति ख० ग० च ।

तगणः जगणः रगणः गु०

S S I I S I S I S S

यत्पादतले चकास्ति चक्रं

मगणः मगण जगणः गु०गु०

S S S I I S I S I S S

हस्ते वा कुलिशं सरोरुहं वा ।

तगणः जगणः रगण. गु०

S S I I S I S I S S

राजा जगदेकचक्रवर्त्ती

मगणः सगण. जगणः गु० गु०

S S S I I S I S I S S

स्याच्छं भद्रविराट् समश्नुतेसौ(१) ॥

अस्यौपच्छन्दसकान्तःपातित्वेऽपि विशेषसञ्ज्ञार्थमर्द्धसमाधिकारे पाठः ।

---

१ भद्रं भद्रविराड् समश्नुतेसाविति ख०, ग०, पुस्तकान्तरपाठश्च। अस्यापि प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पादयोः साम्यादर्द्धसमवृत्तमिदम्। नामद्वयमस्य वर्त्तते, मात्रानियमपक्षे औपच्छन्दसकमिति गणनियमपक्षे भद्रविराडिति। वस्तुतस्तु पूर्व्वोक्तवाक्यैर्मधुरैरित्यस्मिन्नौपच्छन्दसकोदाहरणेऽप्येते गणा घटन्ते, अत्राप्ययुग्युक्पादयोश्चतुर्द्दशषोडशमात्रा आयन्ते। अतः केवलं नाम्न्येव विशेषो न तु लक्षणे। ओजे तपरौ जरौ गुरुश्चेन् मसौ जगौ ग् विराड् भवेन्नोज इति वृत्तरत्नाकरम्।

(१८५) केतुमती स्जौ स्गौ, भ्रौ न्गौ ग् ॥३५॥

यस्य प्रथमे पादे सकारजकारौ सकारगकारौ च, द्वितीये भकाररेफनकारा[१] गकारौ च, [२] तत् केतुमती नाम वृत्तं भवति। तत्रोदाहरणम्।

सगणः जगणः सगणः ग० भगणः रगणः नगणः ग० ग०

। । ऽ । ऽ । । । । ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ

हृतभूरिभूमिपतिचिह्नां[३], युद्धमहस्रलब्धजयलक्ष्मीम्।

सगणः जगणः सगणः ग० भगणः रगणः नगणः ग० ग० ११

। । ऽ । ऽ । । । । ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ

सहते न कोपि वसुधायां, केतुमतीं नरेन्द्र तव सेनाम्[४]॥

(१८६) आख्यानिकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् ॥ ३६ ॥

यस्य प्रथमे पादे तकारौ जकारो गकारौ च, द्वितीये जकारतकारौ जकारो[५] गकारौ च,[६] तदाख्यानिको नाम वृत्तम्। तत्रोदाहरणम्।

---

१ सगणजगणौ सगणगकारौ च, द्वितीये भगणरगणौ नगण इति ग०।

२ गकारौ च भवत इति ख०, पुस्तकान्तरपाठश्च।

३ हृतभूतिभूमिपतिचिह्नामिति ख०।

४ इदमप्यर्द्धसमं वृत्तम्।

५ तगणौ जगणो गकारौ च द्वितीये जगणतगणौ जगण इति ग०।

६ गकारौ च भवत इति ख०, ग०, पुस्तकान्तरपाठश्च।

तगणः तगणः जगणः गु० गु०

S S | S S | | S | S S

भृङ्गावलीमङ्गलगीतनादै-

जगण तगणः जगणः गु० गु०

| S | S S | | S | S S

र्जनस्य चित्ते मुदमादधाति ।

तगण. तगण. जगणः गु गु०

S S | S S | | S | S S

आख्यानिकी च स्मरजन्मपाश(१)

जगण. तगण जगण गु० गु० ११

| S | S S | | S | S S

महोत्सवस्याश्रवणे(२) क्वणन्ती(३) ॥

आख्यानिकी वार्त्ताहारिकोच्यते ।

---

१ जन्मयाते ति ख०, पुस्तकान्तरपाठः। जन्मपाशेतिपाठे गन्त इति पादान्तस्थ शकारस्य गुरुत्वं बोध्यं। एवं मुदमादधातीत्यत्रापि पादान्तवर्णस्य गुरुत्वमति दिश्यते।

२ महोत्सवस्य प्रवणे इति ख०, पुस्तकान्तरपाठः।

३अक्षरतः समं, गणतोऽर्द्धसमं वृत्तमिदम्। एतामाख्यानकीमुपजातिमपि वदन्ति। यतोऽस्याः प्रथमतृतीयौ पादाविन्द्रवज्रालक्षणाक्रान्तौ, द्वितीयचतुर्थावुपेन्द्रवज्रालक्षणवन्तौ। लक्षणे हि तयोः, स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गावित्येते। अवेदमवधेयं, उपजातित्वेन गतार्थत्वे पुनः सञ्ज्ञाकरणम्, नामान्तरप्रज्ञापनार्थम्। उपजातिप्रस्तारस्यैकादशोऽयं भेदः।

(१८७) विपरीताख्यानिकी ज्तौ ज्गौ ग्, तौ ज्गौ ग्॥ ३७॥

यस्य प्रथमे पादे जकारतकारौ जकारो गकारौ च, द्वितीये तकारौ जकारो(१) गकारौ च,(२) तद्विपरीताख्यानिकी नाम वृत्तम्। तत्रोदाहरणम्॥

जगणः तगणः जगणः ग० ग०

अलन्तवालोकवचोभिरेभिः

तगणः तगणः जगणः ग० ग०

स्वार्थं प्रिये साधय कार्य्यमन्यत्।

जगणः तगणः जगणः ग० ग०

कथं कथावर्णनकौतुक(३)स्या-

तगणः तगणः जगणः ग० ग०

दाख्यानिकी चेद्विपरीतवृत्तिः(४)॥

---

१ जगणतगणौ जगणो गकारौ च द्वितीये तगणौ जगण इति ग०।

२ गकारौ च भवत इति पुस्तकान्तरपाठः।

३ कथाकर्णनकौतुकमिति ख०।

४ अचरतः सम, गणतोऽर्द्धसम वृत्तमिदम्। इयमप्युपजातिरुच्यते। तल्लक्षणं पूर्वमुक्तमाख्यानक्युदाहरणटिप्पण्याम्। प्रस्तारभेदविशेषद्वये एकेन गुरुणा लघुना वा यत्रेतरविशेषस्तन्मिश्रणादुपजातयः सर्वत्र बोध्याः। उपजातिप्रस्तारस्य षष्ठोऽयं भेदः।

एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसञ्ज्ञार्थमर्द्धसमाधिकारे पाठः ।

(१८७) हरिणप्लुता सौ सौ ग्, न्भौ भ्रौ ॥३७॥

यस्य प्रथमे पादे सकारास्त्रयो लकारगकारौ च, द्वितीये नकारभकारौ भकाररेफौ च(१) तद्वृत्तं(२) हरिणप्लुतानाम । तत्रोदाहरणम् ।

सगण सगण सगण ल गु

नव पुञ्ज नराधिप विद्विषां(३)

नगण भगण भगण रगण

भयविवर्जितकेतुलघीयसाम्(४) ।

सगण भगण सगण ल० गु

रणभूमिपराङ्मुखवर्त्मनां

नगण भगण भगण रगण

भवति शीघ्रगतिर्हरिणप्लुता(५) ॥

१ द्वितीये नगणभगणौ भगणरगणौ चेति ग० ।

२ भवतस्तद्वृत्तमिति ख०, ग० च ।

३ मुञ्च नराधिप विद्विषामिति ख०, ग०, पुस्तकान्तरपाठश्च ।

४ भयविसर्जितहेतिलघीयसामिति ग० ।

५ अस्याक्षरतो गणतश्च प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पादयोः साम्यादर्द्ध

(१८८) अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ॥ ३८॥

यस्य प्रथमे पादे नकारौ रेफलकारगकाराश्च, द्वितीये नकारजकारौ जकाररेफौ च, (१) तद्वृत्तमपरवक्त्रं नाम(२)। तत्रोदाहरणम्।

नगणः नगणः रगणः ल० ग०। नगणः जगणः जगणः रगणः

सकृदपि कृपणेन चक्षुषा, नरवर पश्यति यस्तवाननम्।

नगणः नगणः रगणः ल० ग० नगणः जगणः जगणः रगणः

न पुनरपरवक्त्रमीक्षते, स हि सुखितोऽर्थिजनस्तथाविधः(३)॥

अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः॥

(१८९) पुष्पिताग्रा नौ र्यौ, न्जौ ज्रौ ग्॥ ३९॥

यस्य प्रथमे पादे नकारौ रेफयकारौ च, द्वितीये नकार-

---

मम वृत्तमिदम्। कस्य प्रस्तारस्य कतमौ भेदाविमौ पादावित्याकाङ्क्षायां पादाक्षरोपरि एकद्व्यादिद्विगुणक्रमेण पूर्वरीत्या विन्यस्तानामङ्कानां मध्ये एकाङ्कमिश्रितलघुवर्णोपरिस्थिताङ्कसन्दोहस्तत्तद्भेदनिर्देशको भवति। एवं सर्वत्र वृत्तेषु बोध्यम्।

१ रेफौ च भवत इति ख०। पुस्तकान्तरपाठः।

२ नाम भवतीति ख०। पुस्तकान्तरपाठः।

३ अक्षरतो गणतश्च युजोरयुजोः पादयोः परस्परं साम्यादर्द्धसमं वृत्तमिदम्। अत्रायुक्पादयोश्चतुर्दश मात्राः, अन्ते रलगाः, द्वितीयतृतीययोश्चतुर्थीपञ्चम्योश्च मात्रयोर्नैकत्र स्थितिरस्ति। अत इदं वैतालीयमपि भवति। यद्यप्यत्र युक्पादान्ते रलगा न पतिता-

जकारौ जकाररेफौ गकारश्च तद्वृत्तं पुष्पिताग्रा नाम(१)। ततोदाहरणम् ।

नगणः नगणः रगणः यगण.

समसितदशना मृगायताक्षी

नगणः जगण. जगणः रगणः ग०

स्मितसुभग(२) प्रियवादिनी विदग्धा ।

नगणः नगण रगण यगणः

अपहरति नृणां मनांसि रामा

नगणः जगणः जगण. रगणः ग०

भ्रमरकुलानि लतेव पुष्पिताग्रा(३) ॥

---

तथाप्येकदेशविकृतमनन्यवदिति न्यायेन नास्य वैतालीयत्वं हीयते इति बोध्यम् । अत एव वैतालीयं पुष्पिताग्राख्यं छन्द्यपवक्त्रमिति छन्दोमञ्जरीकारः, यदन्त्यपरवक्त्राख्यं वैतालीये विपश्चित इति वृत्तरत्नाकरकारः ।

१ गकारश्च भवति तद्वृत्तं पुष्पिताग्रा नाम भवतीति ख० । पुस्तकान्तरपाठश्च ।

२ स्मितसुभगेति ख० । पुस्तकान्तरपाठश्च ।

३ अस्याक्षरतो गणतश्च प्रथमतृतीययोर्द्वितीयचतुर्थयोः पादयोः साम्यादर्द्धसमं वृत्तमिदम् । अस्य प्रथमतृतीययोः पादयोः षोडशमात्राः, द्वितीयचतुर्थयोरष्टादशमात्राः । चतुर्थीपञ्चम्योश्च मात्रयोर्न कलावस्थितिः । पुनश्च प्रतिपादशेषषडक्षरेषु

इयमप्यौपच्छन्दसकान्तर्गता(१) विशेषसञ्ज्ञाज्ञापनार्थमत्रोच्यते।

**(१९०) यवमती जौं जौं, ज्रौ ज्रौ ग् ॥ ४० ॥**

यस्य प्रथमे पादे रेफजकारौ भूयोऽपि रेफजकारौ भवतः, द्वितीये जकाररेफौ पुनर्जकाररेफौ गुरुश्च(२), तद्वृत्तं यवमती नाम। अत्र सम्प्रदायात् पादव्यवस्था। तत्रोदाहरणम् ॥

रगणः जगणः रगणः जगणः

पद्मकान्तु कोमले करे विभाति

जगणः रगणः जगणः रगणः ग०

प्रशंस्य(३) मत्स्यलाञ्छनं पदे च(४) यस्याः।

---

रगणो लघुगुरुद्वयं च पतितमस्ति। अत इदमौपच्छन्दकमपि वृत्तं भवति। उक्तगणोदाहरणस्य लचतुष्टयं यथा,--

रगणः ल० गु० गु० रगणः ल० गु० गु० रगणः ल० गु० गु० रगणः ल० गु० गु०

ना मृगायताक्षी, वादिनी विदग्धा, णां मनासि रामा, तेव पुष्पिताग्रा, इति। अत एवाच "इयमप्यौच्छन्दसकान्तर्गता" इत्याद्युक्तम्। पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं न येति वृत्तरत्नाकरेऽप्युक्तम्।

१ चौपच्छन्दसकान्तर्भूतेति ख०। पुस्तकान्तरपाठः।

२ रेफजकारौ च भवतः। द्वितीये च जकाररेफौ भूयोपि जकाररेफौ गकारश्च भवतीति ख०। पुस्तकान्तरपाठः।

३ प्रशस्तेति ख०। पुस्तकान्तरपाठः।

४ तथा चेति ख०। पुस्तकान्तरपाठः।

रगणः जगणः रगणः जगणः

सा यवान्विता भवेद्घनाधिका च

जगणः रगणः जगणः रगणः गु०

समस्तबन्धुपूजिता प्रिया च पत्युः[१] ॥

यवान्विता यमवतीत्यर्थः ।

(१६१) शिखैकोनत्रिंशदेकत्रिंशदन्ते ग् ॥ ४१ ॥

यस्य प्रथमे पादे एकोनत्रिंशदक्षराणि[२] द्वितीये चैकत्रिंशत्, द्वयोरपि पादयोरन्ते प्रत्येकं गुरुः,[३] तद्वृत्तं शिखा नाम। अर्द्धाधिकाराद्द्वितीयमप्यर्द्धं तादृशमेव । अन्ते गिति नियमार्थमेतत् । अन्ते एव गुरुर्नान्यत्र । तेनायुक्पादेऽष्टाविंशतिरक्षराणि लघून्यन्ते गुरुरेकः[४] । युक्पादे त्रिंशल्लघवोऽन्ते गुरुश्च[५] । तत्रोदाहरणम् ।

१ प्रिया च भर्त्तुरिति ख० । पुस्तकान्तरपाठः। अक्षरतो गणतश्च प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पादयोः साम्यादर्द्धसमं वृत्तमिदम् ।

२ एकोनत्रिंशदक्षराणि भवन्तीति ख० । पुस्तकान्तरपाठः ।

३ प्रत्येकं गकार इति ख० ग०, पुस्तकान्तरपाठः।

४ अष्टाविंशतिर्लघवोऽन्ते गुरुश्चैक इति ख०, ग०, पुस्तकान्तरपाठः ।

५ गुरुश्चान्ते भवतीति ख०, ग०, पुस्तकान्तरपाठः।

अभिमत[१] वकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ
सहचरमलयपवनरयतरलितसरसिजरजसि शुचतरणिविनते[२] ।
विकसितविविधकुसुमसुलभसुरभिशरमदननिहितसकलजने ।
ज्वलयति मम हृदयमविरतमिह[३] सुतनु तव विरहदहनविषमशिखा[४] ॥

(१९२) खञ्जा मुहल्पयुजीति ॥ ४२ ॥

इयमेव शिखा पूर्व्वोक्ते महति बह्वक्षरे पादे अयुजि सति पारिशेष्यादितरस्मिंश्च[५] युजि सति खञ्जा नाम छन्दो भवति । अयमर्थः, एकत्रिंशदक्षरो विषमः पादः कर्त्तव्यः, एकोनत्रिंशदक्षरश्च समः पादः । शेषं यथाप्राप्तमेव । ततोदाहरणम् ।

१ अभिनवेति ख० । पुस्तकान्तरपाठश्च ।

२ रजसि सततमिशयविततेति ख० । पुस्तकान्तरपाठश्च ।

३ हृदयमतिशयमिहेति ख०, ग० । पुस्तकान्तरपाठश्च ।

४ अत्र प्रथमतृतीयौ पादावेकोनत्रिंशदक्षरौ द्वितीयचतुर्थावेकत्रिंशदक्षरौ, अतोऽर्द्धसमवृत्तमिदम् । चतुर्थाध्यायस्थं द्विचत्वारिंशत्सङ्ख्याकं चूलिकालक्षणमत्र प्रायः सर्वं घटते । केवलमेकमात्राधिक्यम् । शिखायाः पादश्चूलिकाया अर्द्धं भवति । तथा सत्येकस्या शिखायां चूलिकाया द्विरावृत्तिर्जायते ।

५ पारिशेष्यादन्यस्मिंश्चेति ख० ।

अपगतघनविशददशदिशि हृतजनदृशि परिणतकण-
कपिलकलमे
प्रविकसितसमकुसुमभवपरिमल[१]सुरभितमरुति शर-
दि समये ।
शुचिशशिमहसि विवृतसरसिरुहि[२] मुदितमधुलिहि
विमलितधरणितले
किमपरमिह कमलमुखि सुखमनुभवति मम हृदयक-
मलमधुना ॥

अर्द्धसमवृत्ताधिकारो निवृत्तः ॥

इति भट्टहलायुधविरचितायां छन्दोवृत्तौ

पञ्चमोऽध्यायः ॥ ५ ॥

---

१ प्रविकसदशनकुसुमघनेति ख०, पुस्तकान्तरपाठश्च ।

२ चषितसरसिरुहीति ख० । पुस्तकान्तरपाठश्च । विततसरसिरुहीति ग० ।

(१९१) यतिर्विच्छेदः ॥ १ ॥

विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति(१) विच्छेदो विश्रामस्थानं, स च यतिरित्युच्यते। नन्वत्र(२) शास्त्रे यतिशब्देन व्यवहारादर्शनान्निरर्थकं सञ्ज्ञाकरणम्। नैष दोषः। यतिरित्यागमादिष्वाचार्य्यपारम्पर्य्यागता(३) सञ्ज्ञेयं तनुमध्यादिवत्। तस्याः शिष्यव्युत्पत्त्यर्थमर्थकथनं(४) यतिर्विच्छेद इति, तस्माददोष इति। अस्ति च लोके शास्त्रान्तरेषु(५) च यतिसञ्ज्ञाव्यवहारः। अपि च अथ यतिरित्यधिकारः(६) आसप्तमाध्यायपरिसमाप्तेः समुद्रेन्द्रियरसादित्यादिषूपतिष्ठते(७)। समुद्रादिशब्दाः साकाङ्क्षत्वाद् यतिरित्यनेनैव सम्बध्यन्ते। यतिशब्दस्याधिकरणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्त्तव्या इत्यर्थः(८)। सिद्धगति अत्रैषा(९) यत्युपदेशोपनिषद् भवति।

यतिः सर्व्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥

१ पादोऽस्मिन्निति गo।

२ नन्वस्मिन्निति गo।

३ यतिरित्यनादिराचार्यपारम्पर्य्यागतेति खo, पुस्तकान्तरपाठश्च। यतिरित्येषमादिराचार्यपरम्परागतेति गo।

४ शिष्यव्युत्पत्त्येऽर्थकथनमिति खo, पुस्तकान्तरपाठश्च। शिष्यव्युत्पत्त्यर्थं कथनमिति गo।

५ लोके शास्त्रे इति गo।

६ अयं यत्यधिकार इति गo।

७ समुद्रेन्द्रियरसादिनिर्देशेषूपतिष्ठते इति खo, पुस्तकान्तरपाठश्च।

८ इत्ययमर्थ इति खo, पुस्तकान्तरपाठश्च।

९ तत्रैषेति खo।

क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्व्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत् ।
द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत् ॥
नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसम्बन्धाः प्रादयश्च परादिवत् ॥

"यतिः सर्व्वत्र पादान्ते" इत्यस्योदाहरणम् । विशुद्धज्ञान-देहायेत्यादि ।
तस्यैव प्रत्युदाहरणम् ।

**नमस्तस्मै महादेवाय शशाङ्कार्द्धधारिणे(१) ।**

इत्येवमादि । "श्लोकार्द्धे तु विशेषतः" इत्यत्र सन्धिकार्य्याभावात्(२) स्पष्टविभक्तिकत्वाच्च(३) विशेषः । तत्रोदाहरणम् ।

**नमस्यामि सदोद्भूत-मिन्धनीकृतमन्मथम् ।**
**ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम्(४) ॥**

---

१ पादादियतेरुदाहरणं, नम इति । अत्र प्रथमपादान्तभूते 'वा'कारे जिह्वोष्ठ-विश्रामे कष्टतया हठाद्यकारपर्यन्तमनुधावनं जायते । अतो द्वितीयपादाद्यक्षरे 'य'कारे यतिः । एतद्धि पूर्वस्य प्रत्युदाहरणे बीजम् । अत्र पादान्तभूते वाकारे यतौ कृतायां पादान्तयतिकस्य विशुद्धज्ञानदेहायेत्यस्य नम इत्येष श्लोको प्रत्युदाहरणं न भवतीति भावः ।

२ सन्धिकार्याभाव इति ख०, ग०, पुस्तकान्तरपाठश्च ।

३ स्पष्टविभक्तिकत्वं इति ख०, ग०, पुस्तकान्तरपाठश्च ।

सन्धिकार्यस्याभावे स्पष्टविभक्तिकत्वे च यतिसौकर्यं । एतच्च श्लोकार्द्धे सर्वत्र विशेषेण घटत इति भावः ।

४ यद्यप्यत्र पादान्तेऽष्टमाक्षरे यतिः कर्त्तुं शक्यते । तथापि समस्तत्वे माध्यक्त-

अत्रेश्वराख्यमित्यस्य पूर्व्वमकारेण सह योगो न कर्त्तव्यः(१)। समासे प्रत्युदाहरणम्।

**सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी,—**
**पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम्(२)॥**

"समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके" तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम्। समासान्तर्भूतविभक्त्यन्तं(३) अव्यक्तविभक्तिकम्। तत्रोदाहरणम्(४)।

**यक्षश्चक्रे जनकतनया,-स्नानपुण्योदकेषु इत्यादि(५)।**

"व्यक्ताव्यक्तविभक्तिके" इति यतिः सर्व्वत्र पादान्त इत्यनेन सम्बध्यते। तत्रोदाहरणम्।

---

विभक्तिकपादान्तस्थले तु श्लोकार्द्ध एव यतिः कर्त्तव्येत्युपदेशः। एतेन आलिङ्गितविभक्तिकस्थले पादान्ते यतिर्न शोभत इति फलितम्।

१ यथा पादान्तभूतस्य हल्वर्णस्य परस्वरेण सह संयोगस्तथा पूर्वार्द्धान्तभूतस्य सन्मथमित्यस्यान्तिमस्य मस्य परार्द्धादिभूतेन ईश्वराख्यमित्यस्यैकारेण सह संयोगो न कर्त्तव्य इत्यर्थः। 'सन्मथम्' इत्यत्रैव यतिनिबन्धनो विश्रामः कर्त्तव्यः।

२ अत्र पूर्वार्द्धस्य परार्द्धेन सह समस्यमानत्वेनास्पष्टविभक्तिकत्वात् पूर्वार्द्धान्ते मञ्जरीत्यत्र न यतिः। अपितु एकदेव द्वितीयार्द्धान्ते यतिः। अत एवेदं पूर्वोदाहरणप्रत्युदाहरणमिति भावः।

३ समसान्तर्भूतविभक्तिकमिति पुस्तकान्तरपाठः, ख०, ग० च।

४ तत्रोभयोदाहरणमिति पुस्तकान्तरपाठः।

५ यक्षश्चक्रे इति मन्दाक्रान्तावृत्तम्। अस्य सप्तदशाक्षरः पादः। तत्र प्रथमं चतुर्थाक्षरे यतिः, ततः षष्ठाक्षरे, ततः सप्तमाक्षरे। अत्र षष्ठाक्षरे या यतिः, सा अव्यक्तविभक्तिकस्थला। जनकतनयेत्यस्य परपदेन समस्यमानत्वात्। अत्रेदं मन्तव्यम्, मन्दाक्रान्ताशिखरिण्यादिषु अब्ध्यादियतिस्थलोक्तिमत्सु कतिपयेषु वृत्तविशेषेषु

वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ।
आदिनन्दा[१] कलाशेष,-शशिलेखाशिखामणिम्[२] ॥

अपि च ।

नमस्तुङ्गशिरश्चुम्बि,-चन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भ,-मूलस्तम्भाय शम्भवे ॥

" क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ ॥ "

तत्रोदाहरणम् ।

पर्य्याप्तं तप्तचामी,-करकटकतटे श्लिष्टशीतेतरांशौ

इत्यादि[३] ॥

तथा । कूजत्कोयष्टिकोला,-हलमुखरभुवः प्रान्तकान्तारदेशाः, इत्यादि ।

---

अवधिनगरमेशादौ यतिः, अनुष्टुबिन्द्रवज्रादिषु कतिपयेषु वृत्तविशेषेषु पादान्त एव यतिर्भवतीति । यतिनियमबाहुल्ये छन्दसां स्वाभाविकी प्रकृतिरेव नियामिका बोध्या ।

१ महाकालमिति ख०, ग०, पुस्तकान्तरपाठश्च ।

२ अत्र प्रथमपादान्ते व्यक्तविभक्तिकस्थला, तृतीयपादान्ते अव्यक्तविभक्तिकस्थला यतिर्ज्ञातव्या । नमस्तुङ्गेतिवृत्ते तु प्रथमतृतीयपादान्ते अव्यक्तविभक्तिकस्थलैव यतिः ।

३ स्रग्धरावृत्ते पादमध्ये प्रतिसप्तमाक्षरे यतिर्भवति, तन्नियमानुसारेण यतौ कर्त्तव्यायां सत्यामत्र चामीकरपदमध्ये 'मी'कारे यतिः । तथा कूजदितिवृत्ते कोलाहलपदमध्ये सप्तमाक्षरे 'ला'कारे यतिः, तथा हास इति वृत्ते संवाहनपदमध्ये सप्तमाक्षरे 'वा'कारे यतिः । पुनस्तथा वैरिञ्चानामिति वृत्ते उच्चारितपदमध्ये सप्तमाक्षरे 'चा'कारे यतिर्ज्ञाता ।

तथा। हासो हस्ताग्रसंवा,-हनमपितुलिता,-द्रीन्द्रसार-द्विषोसौ, इत्यादि।

वैरिञ्चानां तथोच्चा,-रितरुचिरऋचाञ्चाननानाञ्चतु-र्णाम्, इत्यादि[1]।

षज्जे[2] पानीयमाह्ला,-दयति च[3] मद्विषं पक्षपाती पृथक्[4] इत्यादि।

समुद्रादाविति किं। पदमध्ये[5]यतिः पादन्ते माभूत्। तद्यथा।

प्रणमत भवबन्धक्लेशनाशाय नारा,-यणचरणसरोज-द्वन्द्वमानन्दहेतुम्[6]। इत्यादि।

पूर्व्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दुष्यति[7]। तत्रोदाह-रणम्।

---

१ तथोच्चारितरुचिरगिरामाननानां चतुर्णामित्यादीति ख०, ग०, पुस्तकान्तरपाठश्च।

२ खड्गे इति ख०, ग०, पुस्तकान्तरपाठश्च।

३ आल्हादयति हीति ख०, पुस्तकान्तरपाठश्च।

४ पृथक् इति ख०, ग०, पुस्तकान्तरपाठश्च।

५ पदमध्येपीति पुस्तकान्तरपाठः।

६ समुद्रादिपदादौ तु पदमध्येऽपि यतिर्भवति, यद्येतन्नोच्यते, तर्हि पदान्तत्वापेक्षिता यतिः 'क्लेशनाशाय नारा' इत्यादावपदान्तभूते पदमध्यस्थपादान्ते यतिर्माभूदतः समुद्रादाविति वक्तव्यमिति भावः।

७ एकाक्षरत्वे तु पदमध्ये यतिर्दुष्यतीति ख०, ग०, पुस्तकान्तरपाठश्च।

यदक्षर यत्युक्तसकृच्छ्रापूर्त्यर्थं पूर्व्वतः समाकृष्यते, मन्दाक्रम्पादनार्थं च परतः

एतस्या गण्डतलममलं गाहते चन्द्रकान्तमित्यादि[१] ।

एतस्या राजति सुमुखमिदं पूर्णचन्द्रप्रकाशमित्यादि ।

तथा। सुरासुरशिरोनिघृष्टचरणारविन्दः शिव इत्यादि।

"पूर्व्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत्"। अस्यार्थः, योऽयं पूर्व्वपरयोरेकादेशः स्वरसन्धौ विधीयते, स क्वचित् पूर्व्वस्यान्तवद् भवति, क्वचित् परस्यादिवत्। तथा च पाणिनेः स्मरणं[२], अन्तादिवच्चेति (६।१।८५)। तत्र पूर्व्वान्तवद्भावे उदाहरणम्।

स्यादस्थानो,-पगतयमुनासङ्गमे वाभिरामा जम्भारातीभकुम्भोद्भवमिव दधत इत्यादि[३]। (मे॰ दू॰)

---

समाख्यते, एतादृशैकाक्षरस्थलाश्रिता यतिर्दुष्यति, कष्टेन सम्पाद्यते इति स्पष्टार्थः। तथाह्यत्र एतस्या इति मन्दाक्रान्ताछन्दसि अम्बुधियतिपूर्वापरभागयोरेकाक्षरभूते 'गण्ड'शब्दस्य 'ग'कारे अम्बुधित्वेन (४) विहिता यतिः कष्टेन सम्पाद्यते। एवं एतस्याराजति इत्यत्र अम्बुध्यवच्छिन्ने 'रा'कारे, तथा, सुरासुरशिरोनिघृष्टेत्यत्र वस्ववच्छिन्ने 'घृ' कारे च यतिः कष्टेन साध्यते। अतो दुष्टेयं यतिः। एवं सर्वत्रो ज्ञेयम्।

१ चन्द्रकान्तामित्यादीति ख॰, पुस्तकान्तरपाठश्च ।

२ पाणिनिस्मरणमिति ख॰, ग॰ च ।

३ 'स्यादस्थानो' इत्यत्राम्बुध्यवच्छिन्ने 'नो'कारे पदमध्यस्थापि यतिरोकारस्य पूर्वान्तवद्भावेन पूर्वपदघटकीभूताक्षरावयवत्वस्य स्वीकारात् पदान्तवदेवेयमिति मन्यते। एवं द्विकालाद्यनवच्छिन्नेत्यत्रापि दीर्घैकादेशस्य पूर्वान्तवद्भावेन पदान्तवद्भूते पादान्ते 'ला'कारे यतिर्बोध्या। एवं त्रिमुनियतियुक्ते स्रग्धराछन्दसि स्यान्दितोस्तं प्रयाप्सान् इत्यत्र च स्याकारे दीर्घैकादेशस्य परादिवद्भावः। पूर्वपदावयवस्यापि 'स्य' इत्यत्र मुन्यवच्छिन्नद्वितीययत्यक्षरसङ्ख्यासम्पादकत्वात्। एवं कंसकेशोपिचक्र इत्यत्रापि बोध्यम्।

दिक्कालाद्यनवच्छिन्ना,-नन्तचिन्मात्रमूर्त्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ इत्यादि ।

परादिवद्भावे उदाहरणम् ।

स्कन्धं(१) विन्ध्याद्रिबुध्या, निकषति महिष,-स्याहितोऽस्त्तं प्रयास्यन्निति(२) ।
शूलं शूलन्तु गाढं, प्रहर हर हृषी,-केशकेशोऽपि चक्र-
श्चक्रेणाकारि किं नः(३) इत्यादि ॥

अत्र हि स्वरूपस्य(४) परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद् भवति । "यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ" इत्यन्तादिवद्भावविधावपि(५) सम्बध्यते । तेनास्यावन्त्याऽऽगमवजितपूर्णेन्दुशोभं विभातीत्येवम्विधा यतिर्न भवति ।

यणादेशः परादिवदित्यस्योदाहरणम् ।

विततघनतुषार(६)क्षोदशुभ्रांशुपूर्णा,-स्वविरलपदमालां(७)श्यामलामुल्लिखन्त इत्यादि(८) ।

---

१ स्कन्धं इति ग० ।

२ महिषस्याहितोमूनद्दासीदित्यादीति ख०, पुस्तकान्तरपाठश्च । महिषस्याहितोऽनद्दार्षीदित्यादीति ग० ।

३ वक्त्रश्चक्रेणाकारि किन्न इति ख०, पुस्तकान्तरपाठश्च ।

४ तत्र हि स्वरस्येति ख०, ग० च । अत्र हि स्वरस्येति पुस्तकान्तरपाठः ।

५ इत्यन्त्यादिवद्भावविधावपीति पुस्तकान्तरपाठः । इत्यन्तवद्भावविधावपीति ख० ।

६ जतुतुषारेति पुस्तकान्तरपाठः ।

७ स्वविरलपदमालामिति पुस्तकान्तरपाठः ।

८ अष्टसप्तयत्यवच्छिन्ने मालिनीच्छन्दस्यत्र 'पर्णास्' इत्यत्र यणादेशस्य परा-

"नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत्" तेभ्यः पूर्वा यतिर्न कर्त्तव्येत्यर्थः । तत्रोदाहरणम् ।

**स्वादु स्वच्छं सलिलमपि च प्रीतये कस्य न स्यादिति[1]।**

नित्यं प्राक्पदसम्बन्धा इति किम् । अन्येषां पूर्वपदान्तवद्भावो माभूत्[2] । तद्यथा ।

**मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या इति[3] । (मे०दू०)**

**तथा, इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे इत्यादि (मे०दू०)**

"परेण नित्यसम्बन्धाः प्रादयश्च परादिवत्" तेभ्यः परा यतिर्न भवतीत्यर्थः । तत्रोदाहरणम् ।

---

दिवद्भावविधानात् कृतपदादेशस्य 'स्व' इत्यस्य परेण सम्बन्धात् पदान्तत्वसहचरिता यतिरत्र जाता । अत एतेवैतादृशस्थलेपि पदमध्ये यतिः कर्त्तव्या भवतीत्युपदेशः ।

१ चतुः षट्सप्तयत्यवच्छिन्ने मन्दाक्रान्ताच्छन्दस्यत्र सलिलमपि च एतद्दसयतिस्थले 'च'कारात्पूर्वं यतिर्न जाता । एतेन यत्र कुत्रचित् पद्ये चादयस्तथा स्थाप्या यथा तेभ्यः पूर्वं यतिर्न कर्त्तव्याभवेदित्युपदेशः ।

२ अन्येषां चादिभिन्नानामव्ययानान्तु पूर्वपदान्तवद्भावो न कर्त्तव्य इत्यर्थः । एतेन तेषामादिवद्भावे तु न निषेधः कृतो भवति । तस्माद् यत्र कुत्रचित्पद्ये पदान्ते चाद्यन्यान्यव्ययानि तथा स्थाप्यानि यथा तेषां पूर्वपदान्तवद्भावो न भवेदित्युपदेशः । तथा हि मन्दायन्त इति मन्दाक्रान्तावृत्ते चाद्यन्यस्य नेत्यव्ययस्य मन्दायन्ते इति पूर्वपदेन सहान्तवद्भावो न कृतः । तथा चापरिगणयन्नित्यत्र परीत्यव्ययस्य पूर्वपदेन न सम्बन्धोपि तु परपदेन ।

३ कृत्या इत्याहेति क०, ग० च ।

दुःखं मे प्रक्षिपति[१] हृदये दुःसहस्त्वद्वियोग इति[२]।

परेण नित्यसम्बन्धा इति किम्। कर्म्मप्रवचनीयेभ्यः परापि यतिर्यथा स्यादिति। तत्रोदाहरणम्।

प्रियं प्रतिस्फुरत्पादे मन्दायन्ते न खल्विति[३]।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि॥ इति[४]।

अयन्तु चादीनां प्रादीनाञ्चैकाक्षराणामनेकाक्षराणां वा पदान्ते यतावन्तादिवद्भाव इष्यते। नत्वेकाक्षराणां[५] पादमध्ये यतौ[६]। तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात्। तत्र चादीनामुदाहरणम्।

प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासमिति[७]।

प्रादीनामुदाहरणम्।

दूरारूढप्रमोदं हसितमिव परिस्पष्टमाशासखीभिरित्यादि[८]।

---

१ प्रक्षिपतीत्यत्र मन्दाक्रान्तानियमेनाम्बुध्यर्वच्छन्ने प्रेत्यक्षरं प्राप्तापि यतिः परत्वर्त्तीर्न क्रियते। अपितु प्रत्युपसर्ग· क्षिपतीत्यनेन सहैवोचार्यते।

२ इत्यादीति ख०, ग०, पुस्तकान्तरपाठश्च।

३ नखल्विष इति ग०, पुस्तकान्तरपाठश्च।

४ अत्र नखल्विनीत्यत्र महतामपीत्यत्र च कर्म्मप्रवचनीयेभ्यः परा यतिर्ज्ञाता।

५ नत्वनेकाक्षराणामिति ख०।

६ पादमध्ययताविति ख० पुस्तकान्तरपाठश्च। पदमध्ये इति ग०।

७ विस्मितभ्रूविलासमित्यादीति पुस्तकान्तरपाठः।

८ परिस्पष्टमाशासखीभिरित्यादीति पुस्तकान्तरपाठः।

न पर्य्यन्तोऽस्ति वृत्तानां प्रस्तारगणनाविधौ ।
पूर्व्वाचार्य्यकृतं वृत्तचिह्नं(१) किञ्चिदिहोच्यते ।

तत्र गायत्रे छन्दसि वृत्तम् ।

(१९४) तनुमध्या त्यौ ॥ २ ॥

यस्य पादे तकारयकारौ(२), तत्तनुमध्या नाम वृत्तं । तत्रोदाहरणम् ।

तगणः यगणः तगणः यगणः

धन्या त्रिषु नीचा, (३)कन्या तनुमध्या ।

४ ८ (१२)

तगणः यगणः तगणः यगणः

श्रोणीस्तनगुर्वी, भूयात् पतिभोग्या(४) ॥

१ पूर्वाचार्यकृताभिख्याचिह्नमिति ग०, पुस्तकान्तरपाठश्च। एकाक्षरादिषड्विंशत्यक्षरपादानां वृत्तानां प्रस्तारेण बहव एव भेदा जायन्ते इति सत्यमपि तु न तेषां सर्वेषामेव नामोल्लेखपूर्वक प्रयोगः कुत्रापि पूर्वाचार्यैः कृतो दृश्यते। दृश्यते तु तेषां प्रत्येकवृत्तप्रस्तारभेदानां मध्ये कतिपयानां प्रसिद्धभेदानामेव। अतस्तेषामेवात्र नामोल्लेखपूर्वकं सङ्ग्रहः क्रियत इति स्पष्टार्थः। स्वेच्छया कोपि नामोल्लेखविहीनस्य कस्यापि वृत्तभेदस्य प्रयोग कर्त्तुमीहेत तर्हि तत्र न कोपि निषेधः। पुनस्तत्र प्रस्तारक्रियाविधिप्रचारात् प्रमाणाभाव इत्यपि वक्तु न शक्यते। अतोऽत्र कवेरिच्छावकाशो भूयानेव प्रदर्शितोऽस्तीत्यपि स्मरणीयम्।

२ तगणयगणौ भवत इति ख०, ग० च। तकारयकारौ भवत इति पुस्तकान्तरपाठः।

३ विम्बोरेति ख०, ग० च।

४ उर्वी पतिभोग्येति ख०, ग० च। यतोऽत्र पन्थ वैदिकच्छन्दोवर्णनविधौ माध-

अत्र पादान्ते विशेषेण विश्रामः कर्त्तव्य इत्याम्नायः।

उष्णिहि(१)।

(१६५) कुमारललिता ज्सौ ग्॥ ३॥

यस्य पादे जकारसकारौ(२) गकारश्च, तद्वृत्तं कुमारललिता नाम। त्रिभिश्चतुर्भिश्च यत्युपदेशं वर्णयन्ति। तत्रोदाहरणम्।

जगण सगण ग० जगण सगण ग०

यदीय, रतिभूमौ, विभाति, तिलकाङ्कः।

२ ४ ८ १६ (६०)

जगणः सगणः ग० जगणः सगणः ग०

कुमार, ललितासौ, कुलान्यटति नारी(३)॥

त्रीमारभ्यैव वैदिकच्छन्दांसि कृतानि, अतो लौकिकच्छन्दोवर्णनमपि गायत्रीमारभ्यैव क्रियते नोक्थादीन्। चतुष्पादार्षगायत्रीच्छन्दसः पादाक्षराणि षडेव भवन्ति, तेषां प्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताश्चतुःषष्टिभेदा जायन्ते, तत्र त्रयोदशो भेदस्तनुमध्येति नाम्ना ख्यातः। वृत्तभेदसङ्ख्यानयनप्रकारस्तूद्दिष्टक्रियया कर्त्तव्यः। उद्दिष्टक्रिया तु पूर्वमनुष्टुप्प्रकरणे प्रदर्शिता। अन्यच्चापि सुखबोधार्थं पुनः प्रदर्शयिष्ये, यथा, वृत्तपादस्थवर्णोपरि अधो वा एकद्व्यादिद्विगुणक्रमेणाङ्काः स्थाप्याः, तत्र लघुवर्णाङ्कानेकीकृत्य तत्रैकस्मिन् दत्ते या सङ्ख्या निष्पद्यते, सैव तद्वृत्तभेदसङ्ख्या भवति। इत आरभ्य सर्वत्र वृत्तवर्णोपरि यथा, गणानामधोद्दिष्टाङ्कानां विन्यासङ्करिष्यामि, तदनुसारेण तत्र तत्र गणा वृत्तसङ्ख्या च परिज्ञातव्या। अत्र तनुमध्यावृत्ते पादान्ते यतिः कर्त्तव्या। वृत्तरत्नाकरे गायत्रे छन्दसि वृत्तचतुष्टयं, छन्दोमञ्जर्यां वृत्तद्वयमस्ति।

१ उष्णिहि छन्दसीति ख०, ग० च।

२ जगणसगणाविति ख०, ग० च।

३ चतुष्पादार्षोष्णिक्छन्दसः पादभूतानां सप्ताक्षराणां प्रस्तारे क्रियमाणे सर्व-

अत्र केचिद् द्वाभ्यां पञ्चभिश्च यतिमिच्छन्ति । तत्रोदाहरणम् ।

इदं, वदनपद्मं, प्रिये, तव विभाति ।
इह, व्रजति मुग्धे, मनो, भ्रमरतां मे ॥

अनुष्टुभि ।

(१९९) माणवकाक्रीडितकं भ्तौ ल्गौ ॥ ४ ॥

यस्य पादे भकारतकारौ(१) लकारगकारौ च(२), तन्माणवकाक्रीडितकं नाम वृत्तम् । तत्रोदाहरणम् ।

भगण तगण ल० ग० भगण तगण ल० गु०

माणवका, क्रीड़ितकं, यः कुरुते, वृद्धवयाः ।
२ ४(१०७) ७२ ६४

सर्वादिसर्वलघ्वन्ता अष्टाविंशत्यधिकशतभेदा जायन्ते, तत्र तथा विंशत्तमो भेदः कुमारललितेतिनाम्ना प्रसिद्धः । एतद्वृत्तपादभूतानां सप्ताक्षराणां मध्ये प्रथम तृतीयाक्षरं, ततः सप्तमाक्षरे यतिः कर्त्तव्या । "कुलान्यटति नारी" इत्यत्र तृतीये 'न्य' इत्यक्षरे यतिकष्टाद् द्वितीये पञ्चमे अक्षरे यतिः कर्त्तव्या । द्वितीये सप्तमेऽक्षरेऽत्र यतिरिति मतान्तरात् । तत्रोदाहरणम्, इदं वदनपद्ममिति वृत्तम् । यत्राक्षरे यतिः क्रियते तदक्षरं शब्दचरमावयवीभूतं कर्त्तव्यं । तथा सति यतिकष्टं न जायते इत्यपि स्मर्त्तव्यं । छन्दोमञ्जर्यामुष्णिहि वृत्तत्रयमुदीरितम् । यथा, मधुमती कुमारललिता, मदलेखा, इति । वृत्तरत्नाकरे तत्र वृत्तचतुष्टयम् । यथा, मदलेखा, मधुमती, हंसमाला, कुमारललिता, इति । अत्रोष्णिहः सप्ताक्षरः पादो भवतीति बोध्यम् ।

१ भगणतगणाविति ख० ।

२ लकारगकारौ च भवत इति ख०, पुस्तकान्तरपाठश्च ।

भगणः   तगणः   ल० गु०   भगणः   तगणः   ल० गु०

हास्यमसौ, याति जने, भिक्षुरिव, स्त्रीचपलः[1] ॥

अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः ॥

(१९७) चित्रपदा भौ गौ ॥ ५ ॥

यस्य पादे भकारौ[2] गकारौ च भवतस्तच्चित्रपदा नाम वृत्तम्[3] । तत्रोदाहरणम् ।

भगणः   भगणः   गु० गु०   भगणः   भगणः   गु० गु०

यस्य मुखे प्रियवाणी, चेतसि सज्जनता च ।

२ ४ १६, ३२ (५५)

भगणः   भगणः   गु० गु०   भगणः   भगणः   गु० गु०

चित्रपदापि च लक्ष्मी, स्तं पुरुषं न जहाति[4] ॥

अत्र पादान्ते यतिः ।

१ अनुष्टुप्पादघटकीभूतानामष्टाक्षराणां प्रस्तारे क्रियमाणे षट्पञ्चाशदधिकद्विशतभेदा (२५६) जायन्ते, तत्र चाधिकशततमो भेदो माणवकाक्रीडितकेतिनाम्ना ख्यातः । छन्दोमञ्जर्यादावस्य माणवकेति नाम प्रज्ञापितम् । अस्य पादस्य चतुर्थेऽष्टमेऽक्षरे यतिर्बोद्धव्या ।

२ भगणाविति ख०, ग०, घ ।

३ वृत्तं भवतीति ग० ।

४ उक्ताष्टाक्षरप्रस्तारभेदानां मध्ये पञ्चपञ्चाशत्तमो भेदश्चित्रपदेति नाम्ना प्रसिद्धः । अत्र पादान्ते यतिः कर्तव्या । अत्र सज्जनता च, जहाति, इत्युभयत्र पादान्तस्य लघुवर्णयोर्मध्ये इति गुरुत्वमतिदिश्यते ।

## (१९८) विद्युन्माला मौ गौ ॥ ६ ॥

यस्य पादे मकारौ(१) गकारौ च(२), तद्विद्युन्माला नाम वृत्तम्। तत्रोदाहरणम्।

मगणः मगणः गु० गु०

विद्युन्माला,-लोलान्(३) भोगान्,

मगणः मगणः गु० गु०

मुक्ता मुक्तौ, यत्नं कुर्यात्।

मगणः मगणः गु० गु० मगणः

ध्यानोत्पन्नं, निःसामान्यं, सौख्यं

मगणः गु० गु०

भोक्तुं, यद्याकाङ्क्षेत(४) ॥

अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः।

बृहत्याम्।

---

१ मगणाविति ख०, ग० च।

२ गकारौ च भवत इति ख०, ग०, पुस्तकान्तरपाठश्च।

३ विद्युन्मालोलौलानि क०।

४ अष्टाक्षरप्रस्तारस्य सर्वगुर्वात्मकः प्रथमो भेदो विद्युन्मालेतिनाम्ना प्रसिद्धः। अत्र पादस्य चतुर्थेऽष्टमे चाक्षरे यतिः कर्त्तव्या। अनुष्टुभ्यतद्तिरिक्तं वृत्तरत्नाकरोक्तं मो मौ हंसरुतमेतद्धिङ्गिलक्षणप्रतिपादितं। छन्दोमञ्जर्युक्तं तु नभलगा गजाश्वतिरिति लक्षणोक्तं वृत्तम्। अस्मिन् ग्रन्थे हंसरुतवृत्तं वृहत्यामुक्तं। परन्तु नात्र मूल-

## (१९९) भुजगशिशुसृता नौ म्(१) ॥ ७ ॥

यस्य पादे नकारौ मकारश्च(२) भवति, तद् भुजगशिशुसृता नाम वृत्तम्। तत्रोदाहरणम्।

नगणः नगणः मगणः  मगणः मगणः मगणः

इयमधिकतरं, रम्या,विकचकुवलय,-श्यामा।
१ २ ४ ८ १६३२  (६४)

नगणः नगणः मगणः  नगणः मगणः मगणः

रमयति हृदयं, यूनां, भुजगशिशुसृता, नारी(३)॥

वक्रगतिरित्यर्थः। शिशुशब्दस्य सार्थकत्वादन्यैरप्युक्तम्।

---

मुक्तं पठितम्। समानीप्रमाणीति वृत्तद्वयमनुष्टुभ्येव तत्प्रकरणोक्तमत्र पञ्चमाध्याये वर्णितं। अनुष्टुभि वृत्तरत्नाकरपरिष्टे "नाराचिका तरौ लगावित्यन्यदपि वृत्तमुक्तम्। अतं द्रष्टव्यं, अनुष्टुभि यस्य समस्य विषमस्य वार्द्धसमस्य वृत्तस्य विशेषसञ्ज्ञा नास्ति, तदेव वितानमिति सामान्यनाम्ना व्यवहर्तव्यमिति। एतद्धि अनुष्टुभि माणवकाक्रीडितकादिविशेषनामोक्तिर्ज्ञापयति। आर्ष्यां अनुष्टुभीष्टाक्षरः पादो भवतीति ज्ञेयम्। अस्या विद्युल्लेखेति नामान्तरम्।

१ भुजगशिशुभृता नौ मिति ग०।

२ नगणौ मगणश्चेति ख०, ग० च।

३ भुजगशिशुभृता नारीति ग०। चतुष्पादार्धवृत्त्याः पादषट्कीभूतानां नवाक्षराणां प्रस्तारे क्रियमाणे द्वादशाधिकपञ्चशतभेदा जायन्ते, तत्र चतुःषष्टितमो भेदो भुजगशिशुभृतेतिनाम्ना प्रसिद्धः। छन्दोमञ्जर्यामस्या भुजगशिशुभृतेति भुजगशिशुसृतेति च नाम व्यवहृतम्। मुद्रित वृत्तरत्नाकरे तु भुजगशिशुयुतेति पाठान्तरं दृश्यते। अमुद्रितषटीकवृत्तरत्नाकरे भुजगशिशुभृतेतिपाठः। अत्र माद्रस सप्तमाक्षरे नवमाक्षरे च यतिर्ज्ञेया।

अभ्यस्यतानुतरुणी(१) गतिवक्रभावानुन्मूलिताः फणिशिरोभवतापराधाः । इति ।

सप्तभिर्द्वाभ्याञ्च यतिरित्याम्नायः । हंसेति अत्र(२) लिखितमप्यनुष्टुभि बोध्यम् ।

(२००) हंसरुतं म्नौ गौ ॥ ८ ॥

यस्य पादे मगणनगणौ गकारौ च भवतः(३) तद्धंसरुतं नाम । तत्रोदाहरणम् ।

मगणः नगणः ग० ग० मगणः नगणः ग० ग०

अभ्यागामिश्रणिलक्ष्मी,(४) मञ्जीरक्वणिततुल्यं ।

८१६३२ (५७)

मगणः नगणः ग० ग० मगणः नगणः ग० ग०

तीरे राजति नदीनां, रम्यं हंसरुतमेतत्(५) ॥

(२०२) हलमुखी र्नौ स् ॥ ९ ॥

यस्य पादे रेफनकारसकारा(६) भवन्ति, तद्वृत्तं हलमुखी नाम । तत्रोदाहरणम् ।

---

१ अभ्यस्यता तु तरुणीति पुस्तकान्तरपाठः । अभ्यस्यतां तु तरुणीमि ख० ।

२ इदमत्रेति ख०,ग० च । हंसरुतच्छन्दसोऽष्टाक्षरपादत्वादस्यानुष्टुभ्येव पाठ उचित इति भावः ।

३ गकारद्वयञ्च भवतीति ख०, ग० च ।

४ अभ्यागामिमर्णिलक्ष्मीति ख०, ग० च ।

५ अनुष्टुप्पादघटकीभूताष्टाक्षरप्रस्तारस्य सप्तपञ्चाशत्तमो भेदो हंसरुतमिति नाम्ना प्रसिद्धः । अत्र यतिस्थलस्यानुक्तत्वात् पादान्ते यतिर्बोध्या ।

६ यस्य पादे रगणनगणसगणा इति ख० ।

रगणः नगणः सगणः रगणः नगणः सगणः

गण्डयो,-रतिशयकृशं, यन्मुखं, प्रकटदशनम् ।
२ ८,१६,३२,६४,१२८ (२५१)

रगणः नगणः सगणः रगणः नगणः सगणः

आयतं, कलहनिरतं, तां स्त्रियं, त्यज हलमुखीं(१) ॥

त्रिभिः षड्भिश्च यतिरित्याम्नायः ।

पङ्क्तौ ।

(२८३) शुद्धविराण्मसौ जगौ ॥ १० ॥

यस्य पादे मकार-सकार-जकार-गकाराः(२) भवन्ति, तद्वृत्तं शुद्धविराट् नाम । तत्रोदाहरणम् ॥

मगणः सगणः जगणः ग० मगणः सगणः जगणः ग०

विश्वं तिष्ठति कुक्षिकोटरे, वक्त्रे यस्य सरस्वती सदा ।
८ १६ ६४ २५६ (३४५)

मगणः सगणः जगणः ग० मगणः सगणः जगणः ग०

अस्मद्वंशपितामहो(३) गुरु,-र्ब्रह्मा शुद्धविराट् पुनातु नः(४) ॥

अत्र पादान्ते यतिः ।

१ उक्तनवाक्षरप्रस्तारस्य एकपञ्चाशदधिकद्विशततमो भेदो हलमुखीतिनाम्ना प्रसिद्धः । अत्र प्रथम पादस्य तृतीये नवमे चाक्षरे यतिः कर्त्तव्या । मुद्रित-छन्दोमञ्जरीपुस्तके वृहत्यां मणिमध्य-भुजगसङ्गतेति वृत्तद्वयमधिकमुक्तम् । मुद्रित-वृत्तरत्नाकरे तु तत्र भद्रिकेति एकं वृत्तमधिकम् । अमुद्रितवृत्तरत्नाकरे तु चैपकरूपेण पत्रप्रान्तविन्यस्तपाठं भवति ननयाश्च गुर्वौ इति वृत्तमधिकमेकम् ।

२ यस्य पादे मगण-सगण-जगण-गकारा इति ख०, ग० च ।

३ अस्मद्वृद्धपितामह इति ग० । पुस्तकान्तरपाठश्च ।

४ पुनातु व इति ग०, पुस्तकान्तरपाठश्च । पङ्क्तिच्छन्दःपादस्थकीभूतानां

## (२०४) पणवो म्नौ य्गौ ॥ ११ ॥

यस्य पादे मकार-नकार-यकार-गकारा भवन्ति, तद्वृत्तं पणवो नाम । तत्रोदाहरणम् ॥

मगण. नगण. यगण. ग० मगणः नगणः यगणः ग०

मीमांसारस-ममृतं पीत्वा, शास्त्रोक्तिः पटु,-रितरा भाति ।
८१६ ३२,६४ (१२८)

मगण. नगण यगण ग० मगण. नगण. यगणः ग०

एव संमर्दि, विदुषां मध्ये, जल्पामो जय,-पणवन्धत्वात् (१)॥

अत्र च(२) पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ।

## (२०५) रुक्मवती भ्मौ स्गौ ॥ १२ ॥

यस्य पादे भकार-मकार-सकार(३)गकारा भवन्ति, तद्वृत्तं रुक्मवती नाम । तत्रोदाहरणम् ।

---

दशाक्षराणां प्रस्तारे क्रियमाणे चतुर्विंशत्यधिकसहस्रभेदा जायन्ते, तत्र पञ्चचत्वारिंशदधिकत्रिशततमो भेदः शुद्धविराडितिनाम्ना प्रसिद्धः । अत्र पादान्ते यतिः कर्त्तव्या ।

१ उक्तदशाक्षरप्रस्तारस्यैकविंशत्यधिकशततमो भेदः पणवनाम्ना व्यवहृतः । अमुद्रितसटीकवृत्तरत्नाकरकारैस्तु म्नौ जगौ इति पणवनामकमिति पणवलक्षणमुक्तम् । तच्च सूत्रकारविरुद्धम् । अत एव वृत्तरत्नाकरटीकाकृतोक्तम्, 'यस्तु तस्य, जगणस्थाने यगण उचितः'-इति । अत्र पादस्य पञ्चमे दशमे चाक्षरे यतिः कर्त्तव्या । भातीत्यत्र तीत्यस्य गन्तं इति गुरुत्वातिदेशः ।

२ अत्रेति ग० ।

३ भगणमगणसगणेति ग० ।

भगणः मगणः सगणः गु० भगणः मगणः सगणः गु०

पादतले पद्मोदरगौरे, राजति यस्या ऊर्द्धगरेखा(१)।

२ ४ ६४.१२८ (१९९)

भगणः मगणः मगणः गु० भगणः मगणः सगणः गु०

सा भवति स्त्रीलक्षणयुक्ता,रुक्मवती सौभाग्यवती च(२)॥

पादान्ते यतिः।

(२०६) मयूरसारिणी जौ गौ॥ १३॥

यस्य पादे रेफजकारौ रेफगकारौ च(३), तद्वृत्तं मयूरसारिणी नाम। तत्रोदाहरणम्॥

रगणः जगणः रगण गु० रगणः जगणः रगण. गु०

या वनान्तराण्युपैति रन्तुं, या भुजङ्गभोगभुक्तचित्ता(४)।

२ ८ ३१ १२८ (१७१)

१ ऊर्द्ध सुरेखेति क.चिह्नितादर्शपुस्तकपाठस्तु न समीचीनः। भमयोः परतः सगणस्थाने रगणाम्नानात्।

२ उक्तदशाक्षरप्रस्तारस्य नवनवत्यधिकशततमो भेदो रुक्मवतीतिनाम्ना ख्यातः। अत्र पादान्ते यतिः। छन्दोमञ्जर्यादावस्य भेदस्य रूपवतीचम्पकमालेति नामद्वयं पाठान्तरत्वे नापन्यस्तम्।

३ रेफगकारौ च भवत इति ख०, पुस्तकान्तरपाठश्च। रगणजगणौ रगणगकारौ च भवत इति ग०।

४ भुजङ्गभोगभक्तचित्ते ति ख०, पुस्तकान्तरपाठश्च। भुजङ्गभोगसक्तचेता इति ग०।

रगणः जगणः रगणः गु० रगणः जगणः रगणः गु०

**या द्रुतं प्रयाति सन्नतांसा (१) तां मयूरसारिणीं विजह्यात् (२)॥**

अत्र पादान्ते यतिः ।

## (२०७) मत्ता म्भौ स्गौ ॥ १४ ॥

यस्य पादे मकार-भकार-सकार-गकाराः, (३) तद्वृत्तं मत्ता नाम । तत्रोदाहरणम् ॥

मगणः भगणः मगणः गु० मगणः भगणः सगणः गु०

**स्वैरोल्लापैः, श्रुतिपुटपेयैः,-गीतक्रीडा,-सुरतविशेषैः ।**

१६ ३२ ६४ १२८ (२४१)

मगणः भगणः मगणः गु० मगणः भगणः सगणः गु०

**वासागारे, कृतसुरतानां (४) मत्ता नारी, रमयति चेतः (५)॥**

चतुर्भिः षड्भिश्च यतिरित्याम्नायः ।

---

१ सन्नताङ्गीति ग० ।

२ उक्तदशाक्षरप्रस्तारस्यैकसप्तत्यधिकशततमो भेदो मयूरसारिणीतिनाम्ना ख्यातः । अत्र पादान्ते यतिर्भवति ।

३ मगणभगणसगणगकारा इति ग० ।

४ कृतसुकृतानामिति ग० ।

५ उक्तदशाक्षरप्रस्तारस्यैकचत्वारिंशाधिकद्विशततमो भेदो मत्तेतिनाम्ना प्रसिद्धः । अत्र पादस्य चतुर्थे दशमेऽक्षरे च यतिः ।

## (२०८) उपस्थिता त्जौ ज्गौ ॥ १५ ॥

यस्य पादे तकारजकारौ जकारगकारौ च,(१) तद्वृत्तमुपस्थिता नाम । तत्रोदाहरणम् ।

तगणः जगण. जगणः ग० तगण जगणः जगणः ग०

एषा, जगदेकमनोहरा, कन्या, कनकोज्ज्वलदीधितिः ।

४ ८ ३२,६४ २५६ ३६५।

तगण जगण जगण ग० तगणः जगण. जगणः ग०

लक्ष्मी,-रिव दानवसूदनं, पुण्यैर्नरनाथमुपस्थिता(२) ॥

अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ।

त्रिष्टुभि ।

## (२०९) इन्द्रवज्रा तौ ज्गौ ग् ॥ १६ ॥

यस्य पादे तकारौ जकारगकारौ गकारश्च(३), तद्वृत्तमिन्द्रवज्रा नाम । तत्रोदाहरणम् ।

१ तगणजगणौ जगणगकारौ चेति ग० ।

२ उक्तदशाक्षरप्रस्तारस्य पञ्चषष्ट्यत्याधिकत्रिशततमो भेद उपस्थितेतिनाम्ना प्रसिद्धः । अत्र पादस्य द्वितीये दशमेऽक्षरे च यतिः कर्त्तव्या ।

पङ्क्तावेतद्वृत्याद्युक्त नरजगैर्भवेन्मनोरमेति वृत्तं वृत्तरत्नाकरस्थम । वृत्तरत्नाकरपरिशिष्टे तु "दीपकमाला भौ मता जगौ । ज्ञेया हंसी मभनगयुता ।" इति वृत्तद्वयमुक्तम् । छन्दोमञ्जर्यान्तु तत्र त्वरितगतिश्च नजनगैः । नरजगैर्भवेन्मनोरमा । इति वृत्तद्वयमस्ति ।

३ तगणौ जकारो गकारौ च भवत इति म० । तकारौ जकारगकारौ गकारश्च भवतीति ख० । त्रिष्टुभि प्रथमं मूले, 'एकरूपं त्सौ ज्गौ ग्' इति सूत्रमस्ति ।

तगणः तगणः जगणः गु० गु०

यस्यां त्रिषट्सप्तममक्षरं स्याद्,

४ ३२,६४.२५६ (२५७)

तगण. तगणः जगणः गु० गु०

ह्रस्वं सुजङ्घे नवमञ्च तद्वत् ।

तगण. तगणः जगण गु० गु०

गत्या विलज्जीकृतहंसकान्ते,

तगणः तगण. जगण. गु० गु०

तामिन्द्रवज्रां ब्रुवते कवीन्द्राः(१) ॥

अपि च ।

ये दुष्टदैत्या इह भूमिलोके,
द्वेषं व्यधुर्गोद्विजदेवसङ्घे ।
तानिन्द्रवज्रादपि दारुणाङ्गान्,
व्याजीघयद्यः सततं नमस्ते ॥

तथा ।

गोब्राह्मणस्त्रीप्रतिभिर्विरुद्धं,(२)
मोहात् करोत्यल्पमतिर्नृपो यः ।

---

१ त्रिष्टुप्छन्दःपादघटकीभूतानामेकादशाक्षराणां प्रस्तारे क्रियमाणे अष्टचत्वारिंशाधिकद्विसहस्रभेदा जायन्ते, तत्र सप्तपञ्चाशदधिकद्विशततमो भेद इन्द्रवज्रेति नाम्ना प्रसिद्धः । अत्र पादान्ते यतिः कर्त्तव्या ।

२ प्रमिनां विरुद्धमिति ख०, ग० च ।

तस्येन्द्रवज्राभिहतस्य पातः,
क्षौणीधरस्येव(१) भवत्यवश्यम् ॥

पादान्ते यतिः।

(२१०) उपेन्द्रवज्रा जतौ जगौ ग् ॥ १७ ॥

यस्य पादे जकार-तकार-जकारा गकारौ च,(२) तद्वृत्तमुपेन्द्रवज्रा नाम। तत्रोदाहरणम्।

जगण. तगण जगण. ग० ग०
भवन्नखाः कुन्ददलश्रियो ये,
१ ४ =२,६३ २५६(=५८)

जगणः तगण जगण. ग० ग०
नमन्ति लक्ष्मीस्तनलखनेऽपि।

जगण. तगण जगण ग०ग०
उपेन्द्रवज्राधिककर्कशत्वं

जगण. तगण जगणः ग०ग०
कथं गतास्ते रिपुदारणायाम्(३) ॥

अत्र पादान्ते यतिः ॥

१ क्षोणीधरस्येव त ख० ग० च।

२ जगणतगणौ जगणो गकारौ च भवत इति ग०। तकारौ जकारमकारौ मकारश्चेति आदर्शपुस्तकपाठस्तु मूलविरुद्धः। उपेन्द्रवज्रालक्षणे तगणद्वयस्यानुक्तत्वात्।

३ उक्तैकादशाक्षरप्रस्तारस्याष्टपञ्चाशाधिकद्विशततमो भेद उपेन्द्रवज्रेति नाम्ना

## (२११) आद्यन्तावुपजातयः ॥ १८ ॥

आद्यन्ताविति अनन्तरोक्तौ इन्द्रवज्रोपेन्द्रवज्रयोः पादावाह । तौ यदा विकल्पेन यथेष्टं भवतस्तदोपजातयः प्रस्तारवचनात्(१) चतुर्दशप्रकारा जायन्ते । तत्रोदाहरणम् ।

---

ष्यात । अत्र पादान्तं यतिर्ज्ञेया । लेखनेपि इत्यत्र 'पि' इत्यस्य गन्ते इति गुरुत्वातिदेशः ।

१ प्रस्तारवशादिति ख० ग०च । पुस्तकान्तरपाठस्य । यथा चतुरक्षरप्रस्तारे चतुरक्षरस्थानीयलघुगुरुबोधकसरलवक्ररेखास्थापननियमेन प्रस्तारे क्रियमाणे षोडशभेदा जायन्ते । तथा चतुष्पादस्थानीयैकतरवृत्तादाद्याक्षरचतुष्कप्रस्तारे उपजातिवृत्तद्वयाद्याक्षरस्वरूपलघुगुरुस्थापननियमेन प्रस्तारे क्रियमाणेपि षोडशैव भेदा जायन्ते । यस्याद्यो वर्णो गुरुः स गुरुस्थानीयः, यस्याद्यो लघुः स लघुस्थानीयः, सर्वत्रोपजातिप्रस्तारे बोध्यः । एतन्नियमेनात्र गुरुस्थानीय इकारो लघुस्थानीय उकारो बोद्धव्य । यथा गुरोर्वक्ररेखाया अधस्ताल्लघोः सरलरेखा मस्याप्योपरिस्थवच्छेषरेखाश्च मस्थाप्य ऊने गुरुं च दत्वा सर्वगुर्वादिसर्वलघ्वन्तः प्रस्तारः क्रियते । तथात्रापि चतुर्गुरुस्थानीयानां चतुर्णामिकाराणां मध्ये प्रथमेकारादधस्ताल्लघुस्थानीयमुकारं विन्यस्य द्वितीयादिवर्णानुपरिस्थानेव संस्थाप्य ऊने इकारं स्थापयेत । यावच्छेषपङ्क्तावुकारचतुष्टयमायाति । अत्र चतुरिकारात्मकः प्रथमो भेदः शुद्धेन्द्रवज्राख्यः, षोडशश्चतुरुकारात्मको भेदः शुद्धोपेन्द्रवज्राख्यो बोद्धव्यः । शेषा मध्यस्थाश्चतुर्दशभेदा एतयोरेकद्व्यादिपादमिश्रभावादुपजातयस्ते भवन्ति । तासां चतुर्दशोपजातीनां चतुर्दशनामानि पिङ्गलेनोक्तानि, यथा यस्याः प्रथमः पाद उपेन्द्रवज्राया द्वितीयाद्याः शेषा इन्द्रवज्रायाः सोपजातिः कीर्तिनाम्नी प्रथमेयं (उ,इइइ) । द्वितीयोपजातिरियं (इउइइ) वाणीनाम्नी । तृतीयेयं (उउइइ) मालानाम्नी । चतुर्थीयं (इइउइ) शालानाम्नी । पञ्चमीयं (उइउइ) हंसीनाम्नी । षष्ठीयं (इउउइ) मायानाम्नी । सप्तमीयं (उउउइ) जायानाम्नी । अष्टमीयं (इइइउ) बालानाम्नी । नवमीयं (उइइउ) आर्द्रानाम्नी । दशमीयं (इउइउ) भद्रानाम्नी ।। एकादशीयं (उउइउ) रामानाम्नी । त्रयोदशीयं उइउउ) ऋद्धिनाम्नी चतुर्दशीयं (इउउउ) बुद्धिनाम्नी उपजातिर्ज्ञातव्या । इत्तरत्नाकरटीकायामप्येतदेः

अत्रोपजातिर्विविधा विदग्धैः संयोज्यते तु व्यवहारकाले।

विवरणमुपन्यस्तम्। अथामां सुखबोधार्थमिकारोकाराभ्यामुपजातिप्रस्तारो लिख्यते यथा,

| | | |
|---|---|---|
| इ इ इ इ | इ इ इ उ | एवं वंशस्थेन्द्रवंशयोरेतादृशेतरयोश्चोपजातिप्रस्तारेषु चतु |
| उ इ इ इ | उ इ इ उ | र्दशभेदा जायन्ते। अत्रेकारवकाराभ्यां पूर्ववत् प्रस्तारः |
| इ उ इ इ | इ उ इ उ | कर्तव्य। अत्र गुरुस्थानीय इकारो लघुस्थानीयो वकारः। |
| उ उ इ इ | उ उ इ उ | एवमन्यत्राप्यूह्यम्। यथा समाक्षरपादवृत्तद्वयमिश्रणे उप |
| इ इ उ इ | इ इ उ उ | जातिर्भवति तथा विषमाक्षरपादवृत्तद्वयत्रयादिमिश्रणेऽप्युप- |
| उ इ उ इ | उ इ उ उ | जातिर्भवति। तत्र वंशस्थोपेन्द्रवज्रामिश्रितोपजातेरुदाह |
| इ उ उ इ | इ उ उ उ | रणं वाल्मीकिरामायणे सुन्दरकाण्डे यथा, "नमोऽस्तु वा |
| उ उ उ इ | उ उ उ उ | चस्पतये सवज्रिणे स्वयम्भुवे चापि हुताशनाय। अनेन |

चोक्तं यदिदं ममाग्रतो वनौकसामस्य तथास्तु नान्यथा" इति। अत्र स्वयम्भुवे इति द्वितीयपादः उपेन्द्रवज्रायाः अन्ये त्रयः पादा वंशस्थस्य। इन्द्रवंशोपेन्द्रवज्रावंशस्थमिश्रितायाः उपजातेरुदाहरणं भागवते दशमस्कन्धे यथा, 'तावत् प्रविष्टास्त्वसुरोदरान्तरे' इति। इन्द्रवज्रेन्द्रवंशोपेन्द्रवज्रावंशस्थमिश्रितायाः उपजातेरुदाहरणं प्रबोधचन्द्रोदये यथा "विद्याप्रबोधोदयजन्मभूमि" इति। अत एव "समाक्षरजातिमिश्रणमेवोपजातित्वं, द्वयोरेव जात्योर्मिश्रणमेवोपजातित्वमिति च प्राचां मतमनादरणीयम्" इति वृत्तरत्नाकरटीकाकर्त्तॄणाम्। अत्रेदमवधेयम्। जातिद्वयमिश्रणे पूर्वोक्तनियमेन प्रस्तारे क्रियमाणे चतुर्दशभेदा जायन्ते। प्रस्तारसिद्धार्थं तत्रैकस्य नामाद्याक्षरस्य गुरुत्व-कल्पना, अपरस्य लघुत्वकल्पना कार्या। जातित्रयजातिचतुष्टयमिश्रणे तु नोक्त-प्रस्तारविधिः प्रसज्यते। गुरुलघुनोर्द्वित्वनियमात् द्वित्वकस्थल एव तत्प्रसक्तिः। जातित्रयजातिचतुष्टयमिश्रणस्थले तु पादसङ्ख्यास्थानाभिषिक्तानामेकद्वित्रिचतुरक्षरमि-ष्टानामिन्द्रवज्रोपेन्द्रवज्रावंशस्थाद्याक्षराणां पादसङ्ख्यानुविन्यासक्रमेण प्रस्तारे कृते

**अतः प्रयत्नः प्रथमं विधेयो नृपेण पुंरत्नपरीक्षणाय[१] ॥**

एवमन्यान्युपजात्युदाहरणानि कुमारसम्भवादिकाव्येषु[२] द्रष्टव्यानि । समवृत्तप्रस्तावे प्रसङ्गादुपजातीनामुपन्यासो लाघवार्थः । केचिदिदं सूत्रं न्यायोपलक्षणपरं व्याचक्षते । तेन वंशस्थेन्द्रवंशापादयोरपि सङ्करादुपजातयो भवन्ति । तथा

---

प्रथम चत्वारो भेदा जायन्ते पुनस्तेषां पादविन्यासव्यत्ययसमये नामविशेषपौर्वापर्यविन्यासक्रमभेदेन बहवो भेदा भवन्ति । यथा,

| पादाङ्क | २ भेदः | ३ भेद | ४ भेद |
|---|---|---|---|
| १ इ० | उ० | उ० | इ० |
| २ इ० | इ० | व० | व० |
| ३ उ० | इ० | इ० | उ० |
| ४ व० | व० | इ० | इ० |

प्रथमद्वितीयौ पादौ इन्द्रवज्रायाः, तृतीयचतुर्थावुपेन्द्रवज्रावंशस्थयोः, इत्येको भेदः । द्वितीयतृतीयौ इन्द्रवज्रायाः प्रथमचतुर्थौ उपेन्द्रवज्रावंशस्थयोः, इति द्वितीयो भेदः । तृतीयचतुर्थाविन्द्रवज्रायाः, प्रथमद्वितीयावुपेन्द्रवज्रावंशस्थयोः, इति तृतीयो भेदः । प्रथमचतुर्थाविन्द्रवज्रायाः, द्वितीयतृतीयौ वंशस्थोपेन्द्रवज्रयोः, इति चतुर्थो भेदः । इ०, उ०, व०, व० । उ०, इ०, व०, व० । व०, इ०, उ०, व० । व० व० इ०, उ० । व०, व०, उ०, इ०, इत्यादि । एवमग्रेप्यूहनीयम् । एवं सर्वत्रोपजातिस्थले ज्ञेयम् । उपजातीनां नामोल्लेखस्तु दृष्टान्तप्रदर्शनार्थमुपलक्षणमात्रम् । सर्वा एता उपजातयोर्द्धसमविषमवृत्तान्तर्भूता ज्ञेयाः ।

१ व्यवहारलोके इति ख०, पुस्तकान्तरपाठश्च । पुंरत्नपरीक्षणायामिति ख० पुस्तकान्तरपाठश्च । पुरुत्नपरीक्षणायामिति ग० । द्वादशी रामानन्त्युपजातिरियम् । (कीर्त्योपजातिरिति पद्यस्य १, ४, पादान्त पदद्वय पाठान्तरद्वयमेतत्) ।

२ कुमारसम्भवे इति ख०, पुस्तकान्तरपाठश्च ।

शालिनीवातोर्म्योपादयोः अन्येषामपि स्वल्पभेदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः(१) ॥

(२१२) दोधकं भौ भगौ ग् ॥ १९ ॥

यस्य पादे भकारास्त्रयो गकारौ च भवतः, तद्दोधकं नाम वृत्तम्। तत्रोदाहरणम्।

भगण भगणः भगण ग॰ग॰

दोधकमर्थविरोधकमुग्रं,(२)

२३८ ७ ४ १८ ३२ ११८,२५६

भगण. भगण· भगणः ग॰ग॰

स्त्रीचपलं युधि कातरचित्तम्।

भगण· भगण भगण ग॰ग॰

स्वार्थपरं मतिहीनममात्यं,

भगण. भगण· भगणः ग॰ ग॰

मुञ्चति यो नृपतिः स सुखी स्यात्(३) ॥

अत्र पादान्ते यतिः। दोग्धीति दोधकः। केनाप्युपायेन राजानं दोग्धि ॥

---

१ प्रयोगानुसारेणोपजातयो द्रष्टव्या इति ख०, पुस्तकान्तरपाठश्च। प्रयोगात् प्रस्तारेणोपजातयो द्रष्टव्या इति ग०।

२ दोधकमर्थनिरोधकमुग्रमिति ख०, ग०, पुस्तकान्तरपाठश्च।

३ उक्तैकादशाक्षरप्रस्तारस्योनचत्वारिंशदधिकचतुःशततमो भेदो दोधकेतिनाम्ना प्रसिद्धः। अत्र पादान्ते यतिर्बोध्या।

(२१३) शालिनी म्तौ त्गौ ग् समुद्र ऋषयः ॥ २० ॥

यस्य पादे मकारतकारौ तकारगकारौ गकारश्च भवति(१), तद्वृत्तं शालिनी नाम। चतुर्षु सप्तसु यतिः। तत्रोदाहरणम् ॥

मगणः तगण तगण गु० गु०

शुभ्रश्यामा, स्निग्धमुग्धायताक्षी (२)

(२८९) ६२ २५६

मगण तगण तगण गु० गु०

पीनश्रोणि-र्दक्षिणावर्त्तनाभिः।

मगण तगण तगण गु० गु०

मध्ये क्षामा,(३) पीवरोरुस्तनीया.

मगण तगण. तगण. गु० गु०

श्लाघ्या भर्त्तुः शालिनी कामिनी स्यात्(४) ॥

(२१४) वातोर्म्मी म्भौ त्गौ ग्(५) ॥ २१ ॥

यस्य पादे मकारभकारतकारा गकारौ च,(६) तद्वृत्तं

१ मगणतगणौ तगणौ गकारौ च भवत इति ग०।

२ स्निग्धगण्डायताक्षीति ग०। शस्त्री श्यामा स्निग्धमुग्धायताक्षीति ख०।

३ मध्यक्षामेति ग०।

४ उक्तैकादशाक्षरप्रस्तारस्यैनवत्यधिकद्विशततमो भेदः शालिनीतिनाम्ना ख्यातः। अत्र पादस्य चतुर्थ एकादशेऽक्षरे च यतिः कर्त्तव्या।

५ त्गौ गश्चतुः स्वरा इति ख०। त्गौ ग् चेति ग०।

६ मगणभगणौ तगणौ गकारौ च भवत इति ग०।

वातोर्म्मी नाम[1]। चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

मगणः भगणः तगणः गु० गु०

यात्युन्मेकं, सपदि प्राप्य किञ्चित्,

(३०५) १६.३२ २५६

मगणः भगणः तगणः गु० गु०

स्याद्वा यस्या,-श्चपला[2] चित्तवृत्तिः।

मगणः भगणः तगणः गु० गु०

या दीर्घाङ्गी, स्फुटशब्दाट्टहासा[3]

मगणः भगणः तगणः गु० गु०

त्याज्या सा स्त्री, द्रुतवातोर्म्मिमाला[4] ॥

वातोर्म्मीति "स्त्रियां क्तिकारदक्तिनः" इति ङीप्॥

---

१ चकारो यत्यनुकर्षणार्थ इति ग, चिह्नितपुस्तकाधिकः पाठः।

२ वा यस्याः स्याच्चपलेति पुस्तकान्तरपाठः। या यस्याः स्याच्चपलेति ख०, ग० च।

३ स्फोटशब्दाट्टहासा इति ग०।

४ उक्तैकादशाक्षरप्रस्तारस्य पञ्चाधिकविंशतितमो भेदो वातोर्म्मीतिनामा प्रख्यातः। अत्र पादस्य चतुर्थे एकादशेऽक्षरे च यतिर्ज्ञेया। वातोर्म्मीशालिन्योर्भगणतगणस्थाने एव किञ्चिद्भेदः। अत एवानयोर्मिश्रणात् पूर्ववदुपजातयो भवन्ति। एकलघुविभिन्नतायामिव लघुद्वयविभिन्नतायामपि उपजातयो भवन्तीति 'तथा शालिनीत्यादि' वदता ग्रन्थकृता सिद्धान्तीकृतम्।

(२१५) भ्रमरविलसिता म्भौ न्लौ ग् (१)॥ २२ ॥

यस्य पादे मकार-भकार-नकार-लकार-गकाराः स्युः(२)तद् भ्रमरविलसिता(३) नाम वृत्तम्। सैव यतिः। तत्रोदाहरणम्।

मगणः भगणः नगणः ल० ग०

किन्ते वक्त्रं, चलदलकचितं,

१६,३२,६४,१२८,२५६.५.१२

मगणः भगणः नगणः ल० ग०

किं वा पद्मं, भ्रमरविलसितम्।

(१००९)

मगणः भगणः नगणः ल० ग०

इत्येवं मे, जनयति मनसि,

मगणः भगणः नगणः ल० ग०

प्रीति(४) कान्ते, परिमरसरसि(५) ॥

१ भ्रमरविलसितं समुद्र ऋषय इति ख०, ग०, पुस्तकान्तरपाठः। वृत्तरत्नाकरादावपि भ्रमरविलसितमित्येवास्य नाम।

२ मगणभगणनगणलकारगकारा भवन्तीति ग०।

३ भ्रमरविलसितमिति ख०, पुस्तकान्तरपाठः।

४ भ्रान्तिमिति ख०, ग०, पुस्तकान्तरपाठः।

५ उक्तैकादशाक्षरप्रस्तारस्य नवाधिकसहस्रतमो भेदो भ्रमरविलसितेति नाम्ना प्रसिद्धः। अत्र चतुर्थ एकादशेऽक्षरे च यतिः। अत्र चतुर्थपादान्तस्य 'सि' इति वर्णस्य गन्त इति गुरुत्वानिर्देशः।

## (२१६) रथोद्धता नौं लौं ग्॥ २३॥

यस्य पादे रेफनकारौ रेफलकारौ गकारश्च,(१) तद्वृत्तं रथोद्धता नाम॥ तत्रोदाहरणम्।

रगण   नगणः   रगणः   ल० गु०

या करोति विविधैर्विटैः समं,

२   ८, १६, ३२, १२८   ५१२

रगण   नगण   रगण   ल० गु०

सङ्गतिं परगृहे रता च या।

(६९९)

रगण   नगण   रगणः   ल० गु०

म्लानयत्युभयतोऽपि बान्धवान्,

रगणः   नगणः   रगणः   ल० गु०

मार्गधूलिरिव सा रथोद्धता(२)॥

पादान्ते यतिः॥

---

१ रेफनकारौ रेफलकारौ गकारश्च भवतीति ख०, पुस्तकाक्षरपाठश्च। रगण-नगणरगणा लघुर्गुरुरिति ग०।

२ उक्तैकादशाक्षरप्रस्तारस्यैकोनसप्ताधिकषट्शततमो भेदो रथोद्धतेतिनाम्ना-ख्यातः। अत्र पादान्ते यतिः कर्त्तव्या।

(२१७) स्वागता नौ भगौ ग् ॥ २४ ॥

यस्य पादे रेफ-नकार-भकारा-गकारौ च, (१)तद्वृत्तं स्वागता नाम ॥ तत्रोदाहरणम् ।

रगण. नगण भगण गु० गु०

आहवं प्रविशतो यदि राज्ञः,

२ ८,१६,३२ १२८,२५६ (४४३)

रगण. नगण भगण: गु० गु०

पृष्ठतश्चरति वायसमेतः ।

रगण. नगण: भगण: गु० गु०

प्राणवृत्तिरपि यस्य शरीरे,

रगण नगण: भगण: गु० गु०

स्वागता भवति तस्य जयश्रीः(२) ॥

अत्र पादान्ते यतिः ।

(२१८) वृन्ता नौ स्गौ ग् ॥ २५ ॥

यस्य पादे नकारौ सकारगकारौ गकारश्च भवति, तद्वृत्तं वृन्ता नाम । अत्र मण्डूकप्लुतिन्यायेन समुद्र ऋषय इत्यनुवर्त्तते । तेन(३) चतुर्भिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।

---

१ रगणनगणौ भगणो गकारौ च भवत इति ग० ।

२ ऊर्क्तकादशाक्षरप्रस्तारस्य त्रिचत्वारिंशदधिकचतुःशततमो भेदः स्वागतेति नाम्ना ख्यातः । अत्र पादान्ते यतिः ।

३ तदेवमिति ख०, पुस्तकान्तरपाठश्च ।

नगण नगण भगण ग० ग।

द्विजगुरु-परिभवकारी यो,(१)

१ २, ४ ८, १६, ३२ ६४ १२८, (१२५६)

नगण नगण भगण ग० ग।

नरपति-रतिधनलुब्धात्मा।

नगण नगण भगण ग० ग।

ध्रुवमिह निपतति पापोऽसौ

नगण नगण भगण ग० ग।

फलमिव, पवनहतं वृन्तात(२)॥

(२१९) श्येनी जौ लौ ग॥ २६॥

अस्य पादे रेफजकारौ रेफलकारौ गकारश्च(३) तद्वृत्तं श्येनी नाम। तत्रोदाहरणम्।

रगण जगण रगण ल० ग।

क्रूरदृष्टिरायताग्रनासिका,

२ ८ ३२ १२८ ५१२ ६८३)

रगण जगण रगण ल० ग।

चञ्चला कठोरतीक्ष्णनादिनी।

१ द्विजगुरुसुरपरिभावी य इति ग०।

२ एकादशाक्षरप्रस्तारस्य षट्पञ्चाशदधिकद्विशततमो भेदो वृत्तमिति नाम्ना प्रसिद्धः। अत्र चतुर्थे एकादशेऽक्षरे च यतिः कर्त्तव्या।

३ रगणजगणौ रगणलकारौ गकारश्चेति ग०। रेफजकारौ रेफलकारौ गकारश्च भवतीति पुस्तकान्तरपाठः।

रगण जगण: रगण: ल० ग०।

युद्धकाङ्क्षिणी सदामिषप्रिया,

रगण. जगण. रगण. ल० ग०।

श्येनिकेव सा विगर्हिताङ्गना(१) ॥

अत्र पादान्ते यतिः ।

(२२०) विलासिनी ज्रौ ज्गौ ग(२) ॥ २७ ॥

यस्य पादे जकाररेफौ जकारगकारौ गकारश्च भवति, तद्वृत्तं विलासिनी नाम । तस्योदाहरणम् ।

जगण रगण: जगण. गु० गु०।

विलासिनी विलोकितः स कामी,

१ ४ १६ ६४ २५६ (३४२)

जगण: रगण जगण: गु० गु०

दधाति कामसत्त्वचेष्टितं या ।

१ उक्तैकादशाक्षरप्रस्तारस्य चाशीत्यधिकषट्शततमो भेदः श्येनीतिनाम्ना विख्यातः। अत्र पादान्ते यतिः कर्त्तव्या ।

२ सूत्रमिदं मूले नास्ति। मल्लव्यब०, म०, चिह्नितपुस्तकयोश्च नैतद् दृश्यते।

जगणः रगणः जगणः गु० गु०

करोति चञ्चलाचिदृष्टिपातैः,

जगणः रगणः जगणः गु० गु०

यतात्मनश्चयोगिनोऽपि मत्तान्(१) ॥

(२२१) जगती ॥ २८ ॥

अधिकारोऽयमाध्यायपरिसमाप्तेः। यदित ऊर्द्धमनुक्रमिष्यामस्तज्जगतीत्येव(२) वेदितव्यं। वक्ष्यति, तोटकं सः(२१) इति, तत्र जगतीपादस्य लक्षणं भवति(३) ॥

१ उक्तैकादशाक्षरप्रस्तारस्य द्विचत्वारिंशदुत्तरविंशतितमो भेदो विलासिनीति नाम्ना ख्यातः। अनुक्तस्थले पादान्ते यतिः क्रियतेऽतोऽत्र पादान्ते यतिर्बोध्या।

त्रिष्टुभि अत्र यानि वृत्तान्यनुक्तानि तानि वृत्तरत्नाकरोक्तानि यथा, श्री-सुमुखी-भद्रिकोपस्थितोपचित्रा-नवमितामौक्तिकमाला-कुपुरुषजनित-त्यष्टौ। वृत्तरत्नाकर-परिशिष्टे तु विध्वङ्कमाला भवन्तौ तगौ गः। सान्द्रपदं स्यात्तनगलैश्च। शिखण्डितमिदं जभौ तगौ गुरुश्चेत्। इति वृत्तत्रयम्। तत्र छन्दोमञ्जर्यां सुमुख्यानुकूलामोटनकेति वृत्तत्रयमस्ति। अत्रेदमाशङ्क्यते। उपचित्रानवमिताकुपुरुषजनितेतिवृत्तत्रयं मलब्ध-सटीकवृत्तरत्नाकरग्रन्थे न लिखितमस्ति। श्रीतारानाथतर्कवाचस्पतिना परिशोधिते मुद्रितवृत्तरत्नाकरग्रन्थे तु तद् दृश्यते। तदत्र सटीकवृत्तरत्नाकरस्य पुस्तके पाठस्खलनस्य मुद्रितपुस्तके पाठाधिकस्य निर्णयः पुस्तकबाहुल्यं विना न भवतीति विज्ञेयम्। अत्र परिशिष्टोक्तसान्द्रपदवृत्तस्य छन्दोमञ्जर्युक्ताया अनुकूलायाश्च मिश्रणात्, पुनर्वृत्त-रत्नाकरोक्तभद्रिकाया वृत्तायाश्च मिश्रणात् पूर्ववदुपजातयो बोध्याः।

२ अनुक्रमिष्यामो जगतीत्येवमिति ख०, ग०, पुस्तकान्तरपाठश्च।

३ जगत्यधिकारे तोटकं स इत्युक्ते नैकेन सगणेन तोटकवृत्तं भवति, यावद्भिः

(२२२) वंशस्था जतौ ज्रौ ॥ २९ ॥

यस्य पादे जकारतकारौ जकाररेफौ च भवतः, तद्वृत्तं वंशस्था नाम । तत्रोदाहरणम् ।

जगण　नगण　जगण　रगण

विशुद्धवंशस्थमुदारचेष्टितं,

१　४　३२,६४　२५६　१०२४।२०४८,

जगण　नगण　जगण　रगण

गुणप्रियं मित्रमुपास्व सज्जनम् ।

जगण　नगण　जगण　रगण

विपत्तिमग्नाय(१)करावलम्बनं,

जगण　नगण.　जगण.　रगण

करोति यः प्राणपरिक्रयेण सः (२) ॥

पादान्ते यतिः ।

---

सगणैर्जगत्या द्वादशाक्षरपादं पूर्यते तावतां मगणानामध्याहारोत्र क्रियते । अत एवैतल्लक्षणं जगतीपादाक्षरसङ्ख्याज्ञापकं भवति इति भावः ।

१ विपत्तिमग्नस्ये ति ख, ग०, पुस्तकान्तरपाठश्च ।

२ जगतीछन्दःपादघटकीभूतानां द्वादशाक्षराणां प्रस्तारनियमप्राप्ताः षण्णवत्यधिकचतुःसहस्रभेदाः, तत्र त्रिंशतद्वाशीत्यधिकैकसहस्रतमो भेदो वंशस्था इति नाम्ना ख्यातः । अत्र पादान्ते यतिर्ज्ञेया । वंशस्थमिति वृत्तरत्नाकरम् । वंशस्थविलमिति छन्दोमञ्जरी ।

(२२३) इन्द्रवंशा तौ जौ ॥ ३० ॥

यस्य पादे तकारौ जकाररेफौ[1] च[2], तत् तमिन्द्रवंशा नाम। तत्रोदाहरणम्।

तगणः तगणः जगणः रगणः

कुर्व्वीत यो देवगुरुद्विजन्मना-

तगण तगण जगण रगण

मुर्व्वीपतिः पालनमर्थलिप्सया[3]।

तगण तगण जगणः रगणः

तस्येन्द्रवंशेऽपि गृहीतजन्मनः

तगणः तगण जगण रगण

सञ्जायते श्रीः प्रतिकूलवर्त्तिनी[4] ॥

पादान्ते[5] यतिः।

१ तगणौ जगणरगणाविति ग०।

२ तकारौ जकाररेफौ च भवत इति ख०, पुस्तकान्तरपाठः।

३ पालकमर्थलिप्सयेति ख०, पुस्तकान्तरपाठः।

४ उक्तद्वादशाक्षरप्रस्तारस्य त्रिशतैकाशीत्यधिकैकसहस्रतमो भेद इन्द्रवंशा इति नाम्ना ख्यातः। अत्र पादान्ते यतिर्बोध्या। वंशस्थेन्द्रवंशयोः प्रथम एव गणे किञ्चिद्भेदादनयोर्मिश्रणेपि उपजातयो भवन्तीति उक्तम्।

५ अत्रापि पादान्ते यतिरिति ख०, ग०, पुस्तकान्तरपाठः।

(२२४) द्रुतविलम्बितं नभौ भ्रौ ॥ ३१ ॥

यस्य पादे नकारभकारौ भकाररेफौ च भवतः, तद्वृत्तं द्रुतविलम्बितं नाम । तत्रोदाहरणम् ।

नगणः भगणः भगणः रगणः

द्रुतगतिः पुरुषो धनभाजनं,

१ २ ४, १६. ३२, २५६ १२८. १०२४ (१४६४)

नगणः भगणः भगणः रगणः

भवति मन्दगतिश्च सुखोचितः ।

नगणः भगणः भगणः रगणः

द्रुतविलम्बितखेलगतिर्नृपः,

नगणः भगणः भगणः रगणः

सकलराज्यसुखं प्रियमश्नुते(१) ॥

पादान्ते यतिः ।

(२२५) तोटकं सः ॥ ३२ ॥

जगतीत्यधिकारे यावद्भिः सकारैर्जगतीपादः पूर्यते(२)

---

१ सकलराज्यसुखं प्रियमश्नुते इति ख० । उक्तद्वादशाक्षरप्रस्तारस्य चतुःशत-चतुष्षष्ठ्यधिकैकसहस्रतमो । भेदो द्रुतविलम्बितनाम्ना ख्यातः । अत्र पादान्ते यतिः क्रियते ।

२ जगत्या द्वादशाक्षरपादत्वाच्चतुर्भिः सगणैः पादः पूर्यते । अत एव यावच्छब्देन चतुःसङ्ख्या विवक्षिता भवतीति फलितार्थः । इममेवार्थं स्फुटीकुर्वता केन चित् ग्रन्थकारेण "वद तोटकमब्धिसकारयुतम्" इति, केन वा "इह तोटकमम्बुधिसैः प्रथितम्" इति वा तोटकलक्षणं कृतम् ।

तावन्त एव पादेषु यत्र सकारा भवन्ति, तद्वृत्तं तोटकं नाम। तत्रोदाहरणम्।

अमुना यमुनाजलकेलिकृता,
सहसा तरसा परिरभ्य धृता।
हरिणा हरिणाकुलनेत्रवती,
न ययौ नवयौवनभारवती(१)॥

सगण १　सगणः२　सगण ३　सगणः४
त्यज तोटकमर्थनियोगकरं,
१ २ ८,१६,६४,१२८,५१२,१०२४(१७५६)

सगणः१　सगण २　सगण ३　सगणः४
प्रमदाधिकृतं व्यसनोपहतम।

सगण १　सगण २　सगण ३　सगणः४
उपधाभिरशुद्धमतिं सचिव

सगण.१　सगण २　सगण.३　सगणः४
नरनायकभीरुकमायुधिकम्(२)॥

पादान्ते यतिः॥

---

१ इदं तोटकोदाहरणं मञ्जूषं ख,ग,चिह्नितपुस्तकद्वये नास्ति। पुनरस्मिन् वृत्ते तोटकेति नामोल्लेखोऽपि नास्ति। अत एव नैतदुदाहरणमेतद्ग्रन्थाङ्गभूतमपि तु प्रक्षिप्तमिति मे मतिः। भेदान्तराभावे उदाहरणद्वयविन्यासस्य वैयर्थ्यात्।

२ नरनायकभीतकमायुधिकमिति ख०। उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतषट्पञ्चाशदधिकैकसहस्रतमो भेदस्तोटकेति नाम्ना ख्यातः। अत्र पादान्ते यतिर्ज्ञेया।

(२२६) पुटो(१) नौ म्यौ वसुसमुद्राः ॥ ३३ ॥

यस्य पादे नकारौ मकारयकारौ(२) च भवतः, तद्वृत्तं पुटो नाम(३)। अष्टभिश्चतुर्भिश्च यतिः ॥ तत्रोदाहरणम् ।

नगण. नगण मगणः यगण

नविचलति कथञ्चिन्, न्यायमार्गाद्,

१ २ ४ ८,१६ ३२. (५०६) ५१२

नगण. नगण मगण. यगण;

वसुनि शिथिलमुष्टिः, पार्थिवो यः ।

नगण नगण मगण यगण·

अमृतपुट इवासौ, पुण्यकर्म्मा,

नगण नगण. मगणः यगण;

भवति जगति सेव्यः, सर्व्वलोकैः(४) ॥

(२२७) जलोद्धतगतिर्ज्सौ ज्सौ रसर्त्तवः ॥ ३४ ॥

यस्य पादे जकारसकारौ पुनस्ताविव तद्वृत्तं(५) जलोद्धतगतिर्नाम । षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम् ।

---

१ श्रीपुट इति ख०, ग०, पुस्तकान्तरपाठश्च ।

२ नगणौ मगणयगणौ इति ख० ग० पुस्तकान्तरपाठश्च ।

३ श्रीपुटो नामेति ख० ग०, पुस्तकान्तरपाठश्च ।

४ उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकपञ्चशततमो भेदः पुट इतिनाम्ना प्रसिद्धः । अत्र पादस्याष्टमे द्वादशेऽक्षरे च यतिर्बोध्या ।

५ जगणसगणौ पुनर्जगणसगणौ तदिति ख०, ग०, पुस्तकान्तरपाठश्च ।

जगणः सगणः जगणः सगणः

भनक्ति समरे, बहूनपि रिपून्,

१ ४ ८, १६, ६४ २५६ ५१२,१०२४

जगणः सगणः जगणः सगणः

हरिः प्रभुरसौ, भुजोर्जितबलः।

(८८६)

जगणः सगणः जगणः सगणः

जलोद्धतगति-र्यथैव मकर,-

जगणः सगणः जगणः सगणः

स्तरङ्गनिकर, करोति परितः(१)॥

(१२८) ततं नौ म्रौ ॥ ३५ ॥

यस्य पादे नकारौ मकाररेफौ च(२), तद्वृत्तं ततं नाम। तत्रोदाहरणम् ॥

नगणः नगणः मगणः रगणः

कुरु करुणमियं गाढोत्कण्ठिका,

१ २ ४ ८१६,३२ १०८८ १०२४

१ उक्तद्वादशाक्षरप्रस्तारस्याष्टशततमषडशीत्यधिकैकसहस्रतमो भेदो जलोद्धतगतीति नाम्ना प्रसिद्धः। अत्र पादस्य षष्ठे द्वादशाक्षरे च यतिः कर्त्तव्या।

२ नगणौ मगणरगणौ च इति पुस्तकान्तरपाठः।

नगणः नगण मगण रगण·

यदुतनयचकोरी कामाधिका ।

नगणः नगण· मगणः रगण.

विरहदहनमङ्गाटङ्गैः कृशा.

नगण नगण मगण· रगणः

पिवतु तव मुखेन्दोर्विम्बं दृशा(१) ॥

(२२८) कुसुमविचित्रा न्यौ न्यौ ॥ ३६ ॥

यस्य पादे नकारयकारौ पुनस्तावेव भवतः, तद्वृत्तं(२) कुसुमविचित्रा नाम । तत्रोदाहरणम् ॥

नगण यगण नगण· यगण

विगलितहारा सकुसुममाला.

नगण यगणः मगण यगण

मचरणलाक्षावलयसुलक्षा ।

नगण. यगण नगण यगणः

विरचितवेशं सुरतविशेषं.

१ उक्तद्वादशाक्षरप्रस्तारस्य षडशीत्यधिकैक सहस्रतमभेदस्तनेति नाम्ना ख्यात अत्र यतिनियमस्याश्रुतत्वेन पादान्त एव यतिर्बोध्या । अथवा पुष्टहृतवत् अष्टमे द्वादशेऽक्षरे च यतिः ।

२ नगणयगणौ पुनर्नगणयगणौ तद्वृत्तमिति पुस्तकान्तरपाठः ।

नगणः यगणः नगणः यगणः

कथयति शय्या कुसुमविचित्रा(१)॥

(११०) चञ्चलाक्षिका नौ रौ॥३७॥

यस्य पादे नकारौ रेफौ च, तद्वृत्तं चञ्चलाक्षिका नाम। तत्रोदाहरणम्॥

नगण नगण रगण रगण

अतिसुरभिरभाजिपुष्पश्रिया,-

१ २ ४ ८ १६ ३२ १२८ ५१२ १०२४

नगण. नगण रगण. रगण

मतनुत रतयव सन्तानकः।

नगण. नगण रगण रगण

तरुणपरभृतस्वनं रागिणा,-

नगणः नगण रगणः रगणः

मतनुत रतये वसन्तामकः(२)॥

१ उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकनवशततमो भेदः कुसुमविचित्रेति-नाम्ना प्रसिद्धः। अत्र यतिविधेरनुक्तत्वात् पादान्ते यतिः। अथवा षष्ठे द्वादशेऽक्षरे च यतिर्बोध्या।

२ उक्तद्वादशाक्षरप्रस्तारस्य द्विशतषोडशाधिकैकसहस्रतमो भेदश्चञ्चलाक्षिकेति-नाम्ना ख्यातः। अत्र यतेरनुक्तत्वात् पादान्ते यतिर्ज्ञेया। एतद्वृत्तनामप्रवेशाननु-कूलगणत्वादेव चञ्चलाक्षिकेति नाम न प्रविष्टम्। मकरन्दघटिता तु मन्दाकिनीति

(२३१) भुजङ्गप्रयातं यः ॥ ३८ ॥

यस्य पादे चत्वारो यकारास्तद्वृत्तं(१) भुजङ्गप्रयातं नाम। तत्रोदाहरणम् ॥

यगण १ यगण २ यगण ३ यगण ४

पुरः साधुवद्भाति(२) मिथ्याविनीतः,

यगण १ यगण २ यगण ३ यगण ४

परोक्षे करोत्यर्थनाशं हताशः।

यगण १ यगण २ यगण ३ यगण ४

भुजङ्गप्रयातोपमं यस्य चित्तं,

यगण १ यगण २ यगण ३ यगण ४

त्यजेत्तादृशं दुश्चरित्रं कुमित्रम्(३) ॥

छन्दोमञ्जरी। प्रमुदितवदनाभवेन्नौ च रौ इति वृत्तरत्नाकरम्। "तत नौ मौ" "कुसुमविचित्रा न्यौ न्यौ" "चञ्चलाक्षिका नौ रौ" इति सूत्राणि मूलसर्वेषु न पठितानि। मत्सकाशे ख,चिह्नितपुस्तकेपि नैतेषां पाठो दृश्यते। मदीयग.चिह्नितपुस्तके तु 'कुसुमविचित्रा न्यौ न्यौ' इत्येकमेव सूत्रं पठितमस्ति।

१ चत्वारो यगणा भवन्ति तदिति ख०, ग०, पुस्तकान्तरपाठश्च।

२ साधुवद्भातीति ख०, ग०, पुस्तकान्तरपाठश्च।

३ उक्तद्वादशाक्षरप्रस्तारस्य षडशीत्युत्तरपञ्चशततमो भेदो भुजङ्गप्रयातेतिनाम्ना विख्यातः। अत्र पादान्ते यतिः। अत्र यगणस्य चतुरावृत्तिस्तु जगतीपादाक्षरसङ्ख्याबललभ्या। कथं लभ्यते, तत्प्रकारस्तु तोटकं स इत्यत्र प्रदर्शितः। एवं स्रग्विणी र इत्यत्रापि ज्ञेयम्। वृत्तरत्नाकरादौ तु स्पष्टमेतत्

अत्र पादान्ते यतिः ॥

(१३२) स्रग्विणी रः ॥ १५ ॥

यस्य पादे चत्वारो रेफाः सा(१) स्रग्विणी नाम। तत्रोदाहरणम् ॥

रगण १ रगण २ रगण ३ रगण ४

यो रणे युद्ध्यते निर्भरं निर्भय-

२ (१६।११।१२) १२८ (१०२४)

रगण १ रगण २ रगण ३ रगण ४

स्त्यागिता यस्य सर्व्वस्वदानावधिः।

रगण १ रगण २ रगण ३ रगण ४

तं नरं वीक्ष्य लक्ष्मीर्यशः(२) स्रग्विणी,

रगण १ रगण २ रगण ३ रगण ४

नूनमभ्येति सत्कीर्त्तिभुक्ताभुका(३) ॥

अत्र पादान्ते यतिः ॥

---

१ रगणाश्चत्वारस्तत् इति ख० ग०, पुस्तकान्तरपाठः।

२ वीरलक्ष्मीर्यशः इति ख०, पुस्तकान्तरपाठः।

३ उक्तद्वादशाक्षरप्रस्तारस्यैकशतैकसप्तत्यधिकैकसहस्रतमो भेदः स्रग्विणीति नाम्ना प्रसिद्धः। अत्र पादान्ते यतिर्बोध्या।

(२३५) प्रमिताक्षरा सजौ सौ ॥ १६ ॥

यस्य पादे सकारजकारौ सकारौ च(१) भवतः, तद्वृत्तं प्रमिताक्षरा नाम । तत्रोदाहरणम् ॥

सगणः जगणः सगणः सगणः

परिशुद्धवाक्यरचनातिशयं,

१ २ ८ ३२,६४,१२८,५१२ १०२४ (१७७२)

सगण जगण सगण सगणः

परिषिञ्चति श्रवणयोरमृतम् ।

सगणः जगणः सगणः सगणः

प्रमिताक्षरापि विपुलार्थवती

सगणः जगणः सगणः सगणः

तव भारती हरति मे हृदयम्(२) ॥

अत्र पादान्ते यतिः ॥

(२३६) कान्तोत्पीडा भमौ स्मौ ॥

यस्य पादे भकारमकारौ सकारमकारौ च(३), तद्वृत्तं कान्तोत्पीडा नाम । तत्रोदाहरणम् ॥

---

१ सगणजगणौ सगणौ चेति ख०, ग०, पुस्तकान्तरपाठः ।

२ उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतद्विसप्तत्यधिकैकसहस्रतमो भेदः प्रमिताक्षरेति नाम्ना ख्यातः । अत्र पादान्ते यतिर्बोध्या ।

३ भगणमगणौ सगणमगणौ च भवत इति ख०, ग०, पुस्तकान्तरपाठः ।

भगणः मगणः मगणः मगणः

कामशरैर्व्याप्ता खलु कान्तोत्पीडा,

७ ४  ६४,१२८ (१९९)

भगणः मगणः मगणः मगणः

प्राप्तवती दुःखैः परिमुच्यन्ती या।

भगणः मगणः मगणः मगणः

सा लभते चेत्कामुकयोगं गाढं

भगणः मगणः मगणः मगणः

दुःखविमुक्ता[१] स्यात् परमानन्दाप्ता[२] ॥

([२३१]) वैश्वदेवी मौ याविन्द्रियर्षयः ॥ १७ ॥

यस्य पादे मकारौ यकारौ च[३] भवतः, तद्वृत्तं वैश्वदेवी नाम। पञ्चसु सप्तसु च यतिः। तत्रोदाहरणम् ॥

मगणः मगणः यगणः यगणः

धन्यः पुण्यात्मा जायते क्वापि वंशे

५ ११  ६४, ५१२

मगणः मगणः यगणः यगणः

तादृक् पुत्रोऽसौ येन गोत्रं पवित्रम्।

---

१ दुःखवियुक्ता इति ख०, ग०, पुस्तकान्तरपाठः।

२ उक्तद्वादशाक्षरप्रस्तारस्यैकोनशताधिकैकशततमो भेदः कामोत्पीडेतिनाम्ना ख्यातः। अत्र यतिस्थलविशेषानुक्तेः पादान्त एव यतिर्ज्ञेया।

३ मगणौ यगणाविति ख०, पुस्तकान्तरपाठः।

| | Rs. | As. |
|---|---|---|
| The Maitrí Upanishad with a commentary and a translation. By E. B. Cowell, M. A., 3 Fasciculi, ... ... ... | 1 | 14 |
| The Gopála Tápaní Edited by Pandita Harachandra Vidyábhushana .. . ... ... .. | 0 | 10 |
| The Grihya Sutra of A'svaláyana, with the commentary of Gárgyanáráyana. Edited by A'nandachandra Vedántavágis'a 4 Fasciculi, | 2 | 8 |
| The Nrisinha Tápani with the commentary of Sankara A'chárya, edited by Pandita Rámmaya Tarkálankárá. 3 Fasciculus, .. | 1 | 14 |
| Gopatha Bráhmana by Babu Rájendralála Mitra. 2 fasc., ... | 1 | 10 |

SANSKRIT WORKS IN PROGRESS.

*Old Series Nos.* 1 *to* 230, *demi* 8vo.

| | | |
|---|---|---|
| The Lalita-Vistara, or Memoirs of the Life and Doctrines of S'ákya Sinha. Edited by Babu Rájendralála Mitra. Published 5 Fasciculi, ... .. ... ... .. | 3 | 2 |
| The Taittiríya Bráhmana of the Black Yajur Veda, with the commetary of Sáyana. Edited by Bábu Rájendralála Mitra. Published 24 Fasciculi, .. . ... .. | 15 | 0 |
| Taittiriya, Sanhitá Edited by Dr. E Roer, E B. Cowell, M. A. and Mahesachandra Nyáyaratna. Published 26 Fasciculi, . | 16 | 4 |

*New Series, Nos.* 1 *to* 257, *demi* 8vo.

| | | |
|---|---|---|
| The Taittiriya A'ranyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. Published 10 Fasciculi, ... ... | 6 | 4 |
| The Mímáñsá Darśana, with the Commentary of S'avara Svámí. Edited by Pandita Mahesa-chandra Nyáyaratna. Published, 12 Fasciculi, ... .. .. .. | 4 | 6 |
| The Tándya Mahábráhmana with the Commentary of Sáyanácharya. Edited by A'nandachandra Vedántavágísa, 18 Fasciculi, .. | 11 | 4 |
| The Látváyana Sutra. Edited by Pandita A'nandachandra Vedántavágísa. 8 Fasciculi, .. ... ... .. | 5 | 0 |
| The Agni Purána. Edited by Pandita Harachandra Vidyábhushana, 3 Fasciculi, ... .. .. .. ... | 1 | 14 |
| Chhandah Sutra of Pingala Achárya. 2 fasc. .. .. | 1 | 4 |
| The Taittiriya Prátisákhya. Edited by Bábu Rájendralála Mitra. 2 fasc., ... ... .. ... ... | 1 | 4 |
| Gobhiliya Grihya Sutra with a commentary by the Editor, Pandit Chandrakánta Tarkalankar. 2 fasc., .. ... .. | 1 | 4 |
| Sama Veda Sañhita with the commentary of Sayana Achárya. Edited by Pandit Satyavrata Sámasrami, 5 fasc., .. ... | 3 | 2 |
| Chaturvarga Chintámani by Hemádri. Edited by Pandit Bharata Chandra Siromani, 5 fasc., .. ... .. | 3 | 2 |
| Atharvanopanishad No. 249. ... ... ... | 0 | 10 |

*English Translations complete, demi* 8vo.

| | | |
|---|---|---|
| An English Translation of the Brihad A'ranyaka Upanishad, and Commentary. By Dr. E. Röer, 3 Fasciculi, .. ... | 1 | 14 |
| An English Translation of Chhándogya Upanished, by Babu Rájendralála Mitra. 2 Fasciculi, ... ... ... | 1 | 4 |
| An English Translation of the Taittiríya, Aittaréya, Svetáśvatara. Kéna, Iśa, Katha, Mundka and Mándukya Upanishads, by Dr. E. Röer. 2 Fasciculi, .. ... .. .. | 1 | 4 |
| The Súrya-Sidhánta, translated by Pandita Bápú Deva Sástri. 1 Fasciculus, ... ... ... ... ... | 0 | 10 |
| The Siddhánta Siromani, translated by the late Lancelot Wilkinson, ... Pandita Bápú Deva Sástrí. 2 Fas- | | |

*English Translation in progress, demi 8vo*

| | | |
|---|---|---|
| Sáhitya Darpana or Mirror of Composition, a treatise on Literary criticism by Visvanátha Kavirája. Translated into English by Babu Pramadádása Mitra. 3 Fasciculi, — — | 1 | |
| The Brahma Sutra with the commentary of Sankar Achárya. Translated into English by Rev K. M. Banerjea, No 214, — | 1 | |
| Ain Akbari English 6 fasc., — — — | 10 | |

B. MISCELLANEOUS.

| | | |
|---|---|---|
| One complete set of the Journal of the Asiatic Society of Bengal, — | 750 | |
| Journal of the Asiatic Society, from Vol XII. for 1842, to Vol. XXXVI for the 1867, except Vols. XXIII, XXIV. and XXIX. prices as per title page | | |
| Asiatic Researches, from Vols. VI to XII. and Vols. XVII. to XX. each at, — — — — — | 10 | |
| Ditto ditto Index, — — — — | 5 | |
| Catalogue of the Books and Maps in the Library of the Asiatic Society, By Rájendralála Mitra, 1856, — — — | 3 | |
| ———— of the Sanskrit Books and MSS. of the Asiatic Society, — | 1 | |
| ———— of Persian, Arabic, and Urdu, ditto, — — | 1 | |
| ———— of the Fossil Remains of Vertebrata from the Sewalik Hills, the Nerbudda, Perim Island, &c in the Meseum of the Asiatic Society of Bengal. By H. Falconer, Esq , M.D , F. R. S and H S , | 2 | |
| ———— of the Recent Shells in the Museum of the Asiatic Society, by W Theobald, Esq., Jnr , — — - | 3 | |
| ———— of the Reptiles in the Asiatic Society's Museum by W. Theobald, Esq., Jr , — — — — | 3 | |
| Harivansa, 563 pages, royal 4to , — — — | 3 | |
| Mahábhárata, Vols. 3rd and 4th, royal 4to., and Index, — | 40 | |
| Rájatarangini, 440 pages, 4to , — — — | 1 | |
| Csoma's Tibetan Grammar, — — — | 8 | |
| ———— ———— Dictionary, — — — | 10 | |
| Vedánta Sára, translated by Dr. E Roer , — — | 0 | |
| Purana Sangraha, edited by the Rev. K. M. Banerjea, No. I., — | 1 | |

1 —PRIVATE PUBLICATIONS.

| | | |
|---|---|---|
| Wise's Hindu System of Medicine, — — — | 9 | |
| The pilgrimage of Fa Hian, — — — | 5 | |
| Lassen's Bactrian Coins, by Dr. Edward Roer, — — | 5 | |
| Meng Tseu, in Latin, by Stanislaus Julien Two parts in one vol., | 6 | |
| Aborigines of India, by B. H. Hodgson, — — | 3 | |
| History of the Afghans, Pt. I., by Dorn, — — | 5 | |
| Examination and Analysis of Mackenzie Manuscripts, by the Rev. W. Taylor, — — — — | 2 | |
| Low's Siamese Grammar, — — — — | 2 | |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, F.R.S., | 1 | |
| Dictionarium Anamittico-Latinum, by A. J. L. Tabard, — | 14 | |
| Blank Vocabulary for Ethnographical purposes, — — | 1 | |
| Collection of Oriental Proverbs, by Thomas Roebuck, — — | 2 | |
| Mataparikhá, — — — — — | 0 | |
| Travels of Macarius, Pt. I., by F. C. Balfour, — — | 4 | |
| Contributions towards an Index to Indian Bibliography, F. Hall, — | 2 | |
| Outlines of Indian Philology by J. Beames. — — | 2 | |

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 307.



# पिङ्गलच्छन्दःसूत्रम्।

# CHHANDAH SÚTRA

OF

## PINGALA ÁCHÁRYA.

WITH THE

COMMENTARY OF HALÁYUDHA.

EDITED BY

PANDITA VIŚVANÁTHA ŚÁSTRÍ.

FASCICULUS III.

**CALCUTTA.**

PRINTED AT THE GANEŚA PRESS.

1874.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

*No. 57, Park Street.*

## 1.—THE SOCIETY'S PUBLICATIONS.

### A. Bibliotheca Indica.

Sanskrit Works complete.

*Old Series, Nos* 1 *to* 230 *demi* 8vo. Rs

The first two Lectures of the Sañhitá of the Rig Veda. Edited by Dr. E. Röer, Nos. 1 to 4. ... . ... 2
Uttara Naishadha Charita, by S'ri Harsha, with a Commentary. Edited by Dr E. Roer 12 Fasciculi. . . 7
Chaitanya Chandrodaya Nátaka, by Kavikarnapura. Edited by Bábu Rájendralála Mitra. 3 Fasciculi, .. ... 1
Vásavadattá, by Subandhu, with its commentary entitled Darpana. Edited by Professor F. E Hall, M A 3 Fasciculi, .. 1
The Márkandeya Purána. Edited by the Rev. K. M. Banerjea 7 Fasciculi, ... ... .. ... ... 6
The Elements of Polity, by Kámandaki Edited by Rájendralála Mitra. 3 Fasciculi, ... ... .. .. 1

*New Series, Nos.* 1 *to* 268, *demi* 8vo.

The S'rauta S'útra of A'svaláyana, with the Commentary of Gárgya Náráyana. Edited by Pandita Rámanáráyana Vidyáratna 10 Fasciculi. .. ... ... .. ... 6
The S'añkara Vijaya of Anantánanda Giri Edited by Pandita Jayanáráyana Tarkapanchánana. 3 Fasciculi, .. ... 1
Vais'eshika Dars'ana, with the Commentaries of S'añkara Mis'ra &c Edited by Pandita Jayanáráyana Tarkapanchánana. 5 Fasciculi, 3
The Nyáya Dars'ana of Gotama, with the Commentary of Vátsyáyana Edited by Pandita Jayanáráyana Tarkapanchánana. 3 Fasciculi, 1
Páli Grammar, by Kácchâyana, Edited by Dr F. Mason. 2 Fasciculi, 1
The Das'a-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D. C. L. 3 Fasciculi, ... ... .. 1
The Aphorisms of S'andilya, with the commentary af Svapnesvara. Edited by J. R. Ballantyne, LL. D., .. ... 0
The Nárada Pancharátra. Edited by the Rev. K. M. Banerjea. 4 Fasciculi, ... ... .. .. .. 2
The Kaushítaki-Bráhmana-Upanishad with Commentary and a translation by E. B. Cowell. M. A. 2 Fasciculi, ... 1
The Káváyadars'a of S'rí Dandin. Edited with a Commentary by Pandita Premachandra Tarkavágis'a. 5 Fasciculi, ... 3
The Sáñkhya Sára of Vijnána Bhikshu. Edited by Dr. F. E. Hall, 1 Fasciculus, .. ... .. .. 0
The Brihat Sanhitá of Varáha-Mihira Edited by Dr. H. Kern

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.



NEW SERIES, NOS. 230, 258 AND 307.

# CHHANDAH SÚTRA

OF

# PINGALA ÁCHÁRYA.



WITH THE

## COMMENTARY OF HALÁYUDHA.

*EDITED BY*

PANDITA VIS'VANÁTHA S'ÁSTRI.



**CALCUTTA.**

PRINTED AT THE GANÉSA PRESS.

1874.

# छन्दःसूत्रम्

## श्रीपिङ्गलाचार्य्यकृतम्



श्रीहलायुधभट्टकृतमृतसञ्जीवन्याख्यवृत्तिसहितम्

आसियातिकसोसाइट्यनुमत्या

श्रीविश्वनाथशास्त्रिणा यथामति

परिशोधितम्



कलिकाताख्यमहानगरे



गणेशयन्त्रे मुद्रितमिदम् ।

संवत् १९३०

# भूमिका।

---

छन्दःशास्त्रस्य प्रथमः प्रणेता पिङ्गलाचार्य्यः। स पिङ्गलनागः पिङ्गलमुनिरिति नामद्वयेनापि प्रसिद्धः। पतञ्जलेर्नामान्तरं पिङ्गलाचार्य्य इत्यपि जनश्रुतिः। तत्र प्राकृतच्छन्दोग्रन्थे मङ्गलाचरणश्लोके पिङ्गलनागेतिनाम गृहीतं यथा,

जो विविहमत्तसाअरपारं पत्तो विविहमइ हेलं।
पढमं भासतरण्डो णाओ सो पिङ्गलो जअई॥

प्राकृतभाषास्वरूपनौकासहायो यः पिङ्गलनागः विविधमात्रान्यासयुक्तस्य च्छन्दःसागरस्य प्रथमं विशिष्टविमलमत्या हेलयैव पारम्प्राप्तः, स जयतीत्यर्थः। अत्र प्रथमशब्दोपादानाच्छन्दःशास्त्रस्य प्रथमप्रणेता पिङ्गलनाग एव बभूवेति लभ्यते। विविहमत्तसाअरपारं पत्तो इत्यस्यार्थान्तरसङ्गत्यनुकूलामेतामाख्यायिकामनुस्मरन्ति केचित्। एकदा पिङ्गलनागं दृष्ट्वा भोक्तुमुद्यते गरुड़े तमेवमुवाच पिङ्गलनागः, भो गरुड़ पश्य मम छन्दोविद्याकौशलं, यद्येकवारं लिखितं मया पुनर्लिख्यते चेत् तदा मां भक्ष। स इत्युक्त्वा लघुगुरुरेखाविन्यासात्मकप्रस्तारप्रदर्शनच्छलेन उक्तप्रस्तारन्यासपूर्णं भूतलप्रदेशं क्रमशः परित्यजन् समुद्रं विवेश। गमनसमये पिङ्गलनागेनोक्तं सूत्रं यथा, "चतुर्भिर्यकारैर्भुजङ्गप्रयातम्" इति।

अनेनैव पिङ्गलनागेन वैदिकलौकिकच्छन्दसां यानि सूत्राणि कृतानि तेषामर्थावबोधाय बहुभिर्विद्वद्भिर्नाना टीका कृता। तत्रैका टीका वृत्तोक्तिरत्ननाम्नी श्रीनारायणभट्टाराकृता। द्वितीया, पिङ्गलप्रकाशनाम्नी श्रीविश्वरथविरचिता। मया नैते दृष्टे, एकैव या मृतसञ्जीवनीनाम्नी सुविख्यातपण्डित-प्रवरश्रीहलायुधभट्टप्रणीता टीका बहुशो दृश्यते, सैवावलोकिता।

हलायुधभट्टो हि श्रीभट्टनारायणान्ववाये प्रसूतः। अस्य जनकः श्रीधनञ्जयभट्टः। अस्यापराभिधानं पुषो इति। अनेन निघण्टुरेको विरचितः। श्रीवङ्गाधिपादिसूरेणानीतपञ्चब्राह्मणेष्वेकतमो भट्टनारायणः। अस्माद् द्वादशपुरुषो हलायुधभट्ट इति घटककारिकाप्रसिद्धः। ब्राह्मणसर्वस्वग्रन्थारम्भे हलायुधेन स्वल्पो निजवृत्तान्तो विन्यस्तो यथा, असाधारण-धीसम्पत्तिप्रभावतो निखिलविद्यापारावारपारङ्गतत्वाद्विविधसद्गुणाधारतया च श्रीलक्ष्मणसेननृपतिर्बाल्य एवास्मै राजपण्डितपदं, यौवने मन्त्रिपदं, यौवनान्ते च धर्माधिकारिपदं प्रददाविति। अयं लक्ष्मणसेनः श्रीयुतबाबुराजेन्द्रलालमित्रस्य गणनानुसारेण क्रिष्टीयद्वादशशताब्दीप्रारम्भे विराजितवान्, अत एव हलायुधोपि द्वादशशताब्दीप्रारम्भकालिकपण्डित इति मन्तव्यम्। हलायुधस्तु विविधविद्याविशारद आसीत्। अतोऽनेन बहवः सद्ग्रन्थाः कृताः, तन्मध्ये ब्राह्मणसर्वस्वं, पण्डितसर्वस्वं, शिवसर्वस्वं, न्यायसर्वस्वं, मत्स्यसूक्ततन्त्रं, अभिधानरत्नमाला, कविरहस्यनामकं व्याकरणञ्चेत्येते ग्रन्थाः सुविख्याताः।

अथ छन्दःशास्त्रं षट्सु वेदाङ्गेष्वेकमङ्गमितीमं ग्रन्थं वेदाङ्गग्रन्थत्वेन केचिदुपपादयन्ति। तन्मन्दम्, अत्र लौकिकच्छन्दोलक्षणानामपि वर्त्तमानत्वेन निरवच्छिन्नवैदिकच्छन्दोलक्षणनिरूपणाभावात्। अन्ये तु शिक्षाकल्पादिषड्ग्रन्थविशेषानेव वेदाङ्गत्वेन वर्णयन्ति, तदपि मन्दम्, शाखान्तरीयशिक्षाकल्पादिषड्ग्रन्थेषु वेदाङ्गत्वाभावप्रसङ्गात्। वस्तुतस्तु निरवच्छिन्नवेदविषयकशिक्षाकल्पादिषड्जातीयविद्यासामान्यावबोधकग्रन्था वेदाङ्गत्वेन परिगण्यन्ते। एतेन नाव्याप्तिर्नातिप्रसक्तिश्च जायते।

अस्मिन् खलु पिङ्गलच्छन्दःसूत्रनामके ग्रन्थेऽष्टावध्यायाः सन्ति। तत्र प्रथमेऽध्याये, पारिभाषिकसञ्ज्ञा। द्वितीये, गायत्र्यादिच्छन्दसामक्षरसङ्ख्या। तृतीये, गायत्र्यादिनानाविधवैदिकच्छन्दसां लक्षणानि, पादव्यवस्थादिश्च। चतुर्थे, आर्य्यावैतालीयादिच्छन्दसामुक्तिः। पञ्चमे विषमार्द्धसमवृत्तकथनं। षष्ठे, यतिनियमः, षडक्षरपादमारभ्य द्वादशाक्षरपादपर्य्यन्तानां छन्दसां गणविन्यासवैलक्षण्येन क्रमशो विभिन्नलक्षणकथनञ्च। सप्तमे, त्रयोदशाक्षरपादमारभ्य षड्विंशत्यक्षरपादपर्यन्तानां छन्दसां क्रमशो विभिन्नलक्षणानुकीर्त्तनम्। अष्टमे, गाथाप्रस्तारादिनिरूपणम्।

ग्रन्थोयमतीव दुर्लभः। श्रीराजेन्द्रलालमित्रमहाशयैरतिप्रयत्नेन श्रीबाबु अमृतलालमित्रमहाशयसकाशात्समानीय मुद्राङ्कनकारणाय मह्यं प्रदत्तः। पुस्तकमिदं श्रीअमृतलालमित्रमहाशयेन मुद्राङ्कनाय स्वेनैव दशभिर्द्वादशैर्वा पुस्तकैः परिशोधितं,

पाठान्तरितञ्च, अत एवैतद् विद्वत्समादृतम्। एतत्पुस्तकधृत-पाठान्तरं पुस्तकान्तरपाठेतिशब्देन लक्षितं। एतएतदतिरिक्त-मन्यदपि पुस्तकद्वयं मया सङ्गृहीतं। तत्रैकमेसियातिक्सोसा-इटीविद्यालयादानीतं ख,चिह्नितम्। अपरं ममैव दग्धभाग्यस्य दग्धोभयपार्श्वं ग,चिह्नितम्।

एतत्पुस्तकत्रयसाहाय्यमवलम्ब्य यथामति परिशोधितं मयेदम्। मदीयभ्रमवशतो मुद्राङ्कनादिदोषतो वा यत्रदत्र स्खलितं तत्परहितनिरतैर्दयालुभिः सुधीभिर्मदपराधमपमार्ज्यैतत्पाठ-समये परिशोधनीयम्। अत्र या टिप्पनी यश्छन्दसामुपर्यधो गणाङ्कविन्यासः, यश्च वैदिकच्छन्दोदाहरणेषु स्वरादिन्यासः, नैतत्सर्वं मल्लब्धपुस्तकेषु स्थितं। तत्तु मया पुस्तकान्तरेभ्यः सङ्गृह्य प्रदत्तं।

द्विरेफवृत्तयः सन्तः सारमन्वेषयन्ति हि।
यद्यत्र वर्त्तते सारं तत्तेषां भवतान्मुदे॥

---

# पिङ्गलच्छन्दःसूत्रसूचीपत्रम्

---

## (२३८) नवमालिनी न्जौ भ्याविति ॥ १८ ॥

यस्य पादे नकारजकारभकारयकारा भवन्ति(१) तद्वृत्तं नवमालिनी नाम। तत्रोदाहरणम्।

नगण जगण भगण यगण

धवल-यशोंशुकेन परिवीता

नगण जगण भगण यगण

सकलजनानुराग-घुसृणाक्ता।

नगण जगण भगण यगण

दृढगुणबद्धकीर्त्ति-कुसुमौघै-

नगण जगण भगण यगण

स्तव नवमालिनीव नृपलक्ष्मीः(२) ॥

अत्र वसुसमुद्रैर्यतिरित्याम्नायः ॥

इति भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ षष्ठोऽध्यायः ॥

---

उक्तद्वादशाक्षरप्रस्तारस्य सप्तदशाधिकपञ्चशततमो भेदो वाहिनीतिनाम्ना प्रसिद्धः। अत्र पादस्य सप्तमे द्वादशाक्षरे च यतिः कर्त्तव्या। सदैवेत्यत्र वकारस्य गन्त इति गुरुत्वातिदेशः।

१ नगणजगणौ भगणयगणौ च भवत इति ख०. पुस्तकान्तरपाठः।

२ उक्तद्वादशाक्षरप्रस्तारस्य चतुश्चत्वारिंशदधिकनवशततमो भेदो नवमालिनीति-नाम्ना ख्यातः। नवमालिकेति वृत्तरत्नाकरम्। अत्र पादस्य षष्ठे द्वादशे चाक्षरे यतिः कर्त्तव्या।

# अथ सप्तमोऽध्यायः ।

---

इदानीमतिजगतीशक्कर्य्यतिशक्कर्य्यष्टिरत्यष्टिर्धृतिरतिधृतिश्चेति सप्त अतिछन्दांसि(१) एकैकपादाक्षरवृद्ध्या क्रमेणोदाह्रियन्ते(२)। तत्रातिजगत्याम् ।

(२४०) प्रहर्षिणी(३) म्नौ ज्रौ ग् त्रिकदशकौ ॥ १ ॥

यस्य पादे मकारनकारजकाररेफगकारा(४) भवन्ति, तत् प्रहर्षिणी(५) नाम । त्रिभिर्दशभिश्च यतिः । तत्रोदाहरणम् ।

मगण नगण. जगण रगण गु०

उत्तुङ्ग-स्तन कलश द्वयोन्नताङ्गी,

८ १६ ३२ ६४ २५६ १०२४ (१४०१)

मगण नगण जगण. रगण. गु.

लोलाक्षी, विपुलनितम्बशालिनी च ।

---

१ चतुर्थाध्याये द्वितीय द्वितीयमतिच इत्यत्रोक्तामामिति शेषः । अत्र शक्करीत्यत्र शक्वरी शक्करीति च पाठद्वयं ज्ञेयम् ।

२ क्रमेणोदाह्रियन्त इति ख०, ग०, पुस्तकान्तरपाठश्च ।

३,५, प्रहर्षणीति ख०, पुस्तकान्तरपाठश्च ।

४ मगणनगणौ जगणरगणगकारा इति ख०, पुस्तकान्तरपाठश्च ।

मगण नगण जगण रगण गु०

बिम्बोष्ठी, नरवरमुष्टिमेयमध्या,

मगण नगण जगण रगण गु०

मा नारी, भवति मनःप्रहर्षिणीति(१) ॥

(२४१) रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ(२) ॥ २ ॥

यस्य पादे जकारभकारौ सकारजकारौ गकारश्च(३) तद्वृत्तं रुचिरा नाम । चतुर्भिर्नवभिश्च यतिः । तत्रोदाहरणम् ।

जगण भगण सगण जगण गु०

मृगत्वचा, रुचि र त रा म्ब र क्रि यः,(४)
१ ४ १६,३२ ६४,१२८ ५१२ २०४८।२८०६)

जगण भगण सगण जगण गु०

कपालभृत्, कपिलजटाग्रपल्लवः ।

१ भवतु मनःप्रहर्षणी न इति ख०। भवतु मनःप्रहर्षणी ते इति ग०। भवति मनःप्रहर्षिणी न इति पुस्तकान्तरपाठः।

अतिजगतीछन्दस पादघटकीभूतानां त्रयोदशाक्षराणां प्रस्तारे क्रियमाणे एकशत-द्विनवत्यधिकाष्टसहस्रभेदा जायन्ते, तत्र चतुःशतैकाधिकैकसहस्रतमो भेदः प्रहर्षिणीतिनाम्ना ख्यातः।

२ समुद्रनवकाविति ख०, पुस्तकान्तरपाठश्च।

३ जगणभगणौ सगणजगणौ गश्चेति ख०। जगणभगणौ सगणजगणौ गुरुश्चेति ग०।

४ हतरुचिराम्बरक्रिय इति, ख०, पुस्तकान्तरपाठश्च।

जगण भगण सगण जगण गु०

ललाटदृग्दहनतृणीकृतस्मरः,

जगण भगण सगण जगण गु०

पुनातु वः शिशुशशिशेखरः शिवः(१) ॥

(१४२) मत्तमयूरं(२) म्तौ यमौ ग समुद्रनवकौ ॥ ३ ॥

यस्य पादे मकारतकारौ यकारसकारौ गकारश्च, तद्वृत्तं मत्तमयूरं नाम(३)। पूर्ववद्यतिः। तत्रोदाहरणम्।

मगण तगण यगण सगण गु०

व्यूढोरस्कः सिंहसमानानतमध्यः,(४)

मगण तगण यगण सगण गु०

पीनस्कन्धो मांसलहस्तायतबाहुः(५)।

---

१ त्रयोदशाक्षरप्रस्तारस्य अष्टशतषडधिकद्विसहस्रतमो भेदो रुचिरेति नाम्ना ख्यातः। अतिरुचिरेति वृत्तरत्नाकरम्। अत्र पादस्य चतुर्थे नवमेऽक्षरे च यतिः कर्त्तव्या।

२ मत्तमयूर इति ख० ग०, पुस्तकान्तरपाठः।

३ मगणतगणयगणसगणगकारा भवन्ति, तन्मत्तमयूरं नामेति ख०, ग०, पुस्तकान्तरपाठः।

४ सिंहसमानाननदृप्तिरिति ख०, ग० च। सिंहसमानानतदृप्तिरिति पुस्तकान्तरपाठः।

५ मिश्रहस्तायतबाहुरिति ख०, पुस्तकान्तरपाठः।

मगण तगण यगण मगण गु०

कम्बुग्रीवः, स्निग्धशरीरस्तनुलोमा,

मगण तगण यगण मगण गु०

भुङ्क्ते राज्यं, मत्तमयूराकृतिनेत्रः[१] ॥

(२४३) गौरी नौ न्सौ ग[२] ॥ ४ ॥

यस्य पादे नकारत्रयं सकारो गकारश्च, सा गौरी[३]। तत्रोदाहरणम्।

नगण नगण नगण सगण गु०

सकलभुवनजगणनतपादा,

१ २ ४ ८,१६,३२ ६४,१२८,२५६,५१२ १०२४(२०४८)

नगण नगण नगण सगण गु०

निजपदभजनशमितविषादा।

१ उक्तत्रयोदशाक्षरप्रस्तारस्य षट्शतत्रयस्त्रिंशदधिकैकपञ्चमतमो भेदो मत्तमयूरनामा विख्यातः। अत्र पादस्य चतुर्थे नवमेऽक्षरे च यतिर्बोध्या।

२ मूलसूत्रपाठे नेदं सूत्रं पठितम्।

३ नगणौ नगणसगणौ गुरुश्च तद्वृत्तं गौरीति ख०, पुस्तकाक्षरपाठश्च।

नगण नगणः नगण. मगण गु॰

विजितमदनमिह घनयनपद्मा

नगण. नगण नगण मगण गु॰

भरतु मकन्नमिह भवति गौरी(१) ॥

शक्र्यास्(२) ॥

---

१ जगति गौरीति पुस्तकान्तरपाठः । ख॰ ग पुस्तके तु नेदमुदाहरणमस्ति । उक्त-त्रयोदशाक्षरप्रस्तारस्याष्टचत्वारिंशदधिकद्विसहस्रतमो भेदो गौरीतिनाम्ना ख्यातः ।

अतिजगत्यामत्र ग्रन्थे यानि वृत्तान्युक्तानि तेषां मध्ये मुद्रितवृत्तरत्नाकरग्रन्थे गौरी नास्ति, ततोऽधिकं क्षमामञ्जुभाषिणीति वृत्तद्वयमस्ति । सटीकामुद्रितवृत्तरत्नाकरे तु क्षमाचन्द्रिकामञ्जुभाषिणीचञ्चरीकावलीति वृत्तचतुष्टयमस्ति । तद्यथा, तुरगरसयति नौ ततौ गः क्षमा । सजसा जगौ भवति मञ्जुभाषिणी । ननतरगुरुभिश्चन्द्रिकाश्व-षड्भिः । यमौ रौ विख्याता चञ्चरीकावली ग इति । मुद्रितछन्दोमञ्जर्यान्तु ननततगुरु-भिश्चन्द्रिकाश्वर्तुभिरिति चन्द्रिकालक्षणमस्ति । अस्या उत्पलिनीति नामान्तरमप्युक्तं वोक्तम् । पुनरत्रैव जगत्यामेतद्ग्रन्थे नुक्तानि यानि वृत्तानि सन्ति, तानि यथा, नयुगलसयुगलगैरिति चण्डी । सजसा जगौ च भवति प्रबोधिता । सजसाः सगौ च कथितः कलहंसः । भवति मृगेन्द्रमुखं नजौ जरौ ग इति । अत्र प्रबोधिता मञ्जुभाषिण्योर्नामान्तरं लक्षणन्त्वेकमेव । मञ्जुभाषिण्या सुनन्दिनीति कलहंसस्य च सिंहनाद इति नामान्तरमप्युक्तं वोक्तम् । परिशिष्टे नन्दिनीति कलहंस नामान्तरं । इह नन्दिनी सजससैर्गुरुयुक्तैरिति तल्लक्षणम् । परिशिष्टे जगत्या-मेभ्योऽप्यधिकानि वृत्तान्युक्तानि । तानि यथा, नमरयुगगैश्चन्द्ररेखर्त्तुलोकैः । इद छन्दकं यत्र येभ्यश्चतुर्भ्यो गः । उपस्थितमिदं जसौ तौ यदि गुरुः स्यात् । ऋतुमुनि-यति विद्युन्नतौ तौ गुरुः । जसौ सजौ गौ भवति मञ्जुहासिनी । कुटजगतिर्नजौ पञ्चर्तु भौ गुरुः, इति । परिशिष्टोक्तेन छन्दकवृत्तेन सह भुजङ्गप्रयातस्य मिश्रणात् पूर्ववदुपजातयो बोध्याः । मुद्रितामुद्रितवृत्तरत्नाकरयोः क्षमालक्षणे वैलक्षण्यमस्ति ।

२ शक्वर्यामिति पुस्तकान्तरपाठः ।

## (२४४) असम्बाधा म्तौ न्सौ गाविन्द्रियनवकैः ॥ ५ ॥

यस्य पादे मकारतकारौ नकारसकारौ[१] गकारौ च भवतः, तद्वृत्तमसम्बाधा नाम। पञ्चभिर्नवभिश्च यतिः। तत्रोदाहरणम्।

मगण तगण नगण सगण गु० गु०

भङ्क्त्वा दुर्गाणि, द्रुमवनमखिलं छित्वा,

२११७, ३२,६४,१२८,२५६ ५१२,१०२४

मगण तगण नगण सगण गु० गु०

हत्वा तत्सैन्यं, करितुरगबलं हत्वा।

मगण तगण नगण सगण गु० गु०

येनासम्बाधा, स्थितिरजनि विपक्षाणां,

मगण तगण नगण सगण गु० गु०

सद्वाक्श्रीनाथः स जयति नृपतिर्मुञ्जः[२] ॥

---

१ मगणतगणनगणसगणा इति ख०, पुस्तकान्तरपाठश्च।

२ षट्पञ्चाशदक्षरं शर्करीत्युक्तत्वाच्छर्करीपादघटकीभूतानि चतुर्दशाक्षराण्येवोपलक्ष्यन्ते। तेषां वर्णप्रस्तारे क्रियमाणे त्रिशतचतुरशीत्यधिकषोडशसहस्रभेदा भवन्ति। तत्र सप्तदशाधिकद्विसहस्रतमो भेदोऽसम्बाधेतिनाम्ना प्रसिद्धः। अत्र पादस्य पञ्चमे नवमेऽक्षरे च यतिः कर्तव्या। छन्दोमञ्जर्यां तस्या मो तो नौ सौ गः शरनवभिरसम्बाधा"-इति विभिन्नलक्षणमस्ति।

(२४५) अपराजिता नौ र्सौ ल्गौ स्वर ऋषयः(१) ॥ ६ ॥

यस्य पादे नकारौ रेफसकारलकारगकाराश्च,(२) तद्वृत्तमपराजिता(३) नाम। सप्तभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

नगण नगण रगण सगण ल० ग०

फणिपति व ल यं, ज टा म् कु टो ज्व लं,

१, २ ४, ८ १६ ३२, १२८, ५१२ १०२४, ५८२४)४०९६

नगण नगण रगण सगण ल० ग०

मनसिजमथनं. त्रिशूलविभूषितम् ।

नगण नगण रगण सगण ल० ग०

स्मरसि यदि सखे, शिवं शशिशेखरं.

नगण नगण रगण सगण ल० ग०

भवति तव तनुः, परैरपराजिता(४) ॥

१ स्वरर्षय इति ख०, ग०, पुस्तकान्तरपाठश्च।

२ नगणौ रगणसगणलकारगकाराश्चेति ख०, ग०, पुस्तकान्तरपाठश्च।

३ तदपराजितेति पुस्तकान्तरपाठ।

४ तनुर्जगत्यपराजितेति ख०, ग०, पुस्तकान्तरपाठश्च। उक्ताचतुर्दशाक्षरप्रस्तारस्याष्टसप्तचतुर्विंशत्यधिकपञ्चसहस्रतमो भेदोऽपराजितेतिनाम्ना प्रसिद्धः। अत्र पादस्य सप्तमे चतुर्दशेचाक्षरे यतिर्बोध्या।

(२५६) प्रहरणकलिता नौ भनौ लगौ च ॥ ७ ॥

अस्य पादे नकारौ भकारनकारलकारगकाराश्च तद्वृत्तं[1] प्रहरणकलिता नाम। चकारात् पूर्वोक्तैव यतिः। तत्रोदाहरणम्।

नगण नगण भगण नगण ल० ग०

सुरमुनि मनुजैः रुपचित चरणां
१ २, ४ ८ १६ ३२ ६४ १२८ २५६ ५१२ १०२४, २०४८, ४०९६

नगण नगण भगण नगण ल० ग०

रिपुभयचकित-त्रिभुवनशरणाम्[2]

नगण नगण भगण नगण ल० ग०

प्रणमत महिषा-सुरतनुकुपितां,[3]

नगण नगण भगण नगण ल० ग०

प्रहरणकलितां, पशुपतिदयिताम्[4] ॥

१ नगणौ भगणनगणलकारगकाराश्च भवन्तीति ख०, ग०, पुस्तकान्तरपाठश्च।

२ त्रिभुवनशरणामिति ख० ग० पुस्तकान्तरपाठश्च।

३ महिषासुरवधकुपितामिति ख०, ग०, पुस्तकान्तरपाठश्च।

४ उक्तचतुर्दशाक्षरप्रस्तारस्यैकशताष्टाविंशत्यधिकाष्टसहस्रतमो भेदः प्रहरणकलितेतिनाम्ना ख्यातः प्रहरणकलिकेति छन्दोमञ्जरीवृत्तरत्नाकरोक्तपाठः। अत्रापि पादस्य सप्तम चतुर्दशाक्षरे यतिर्ज्ञेया।

(२४७) वसन्ततिलका त्भौ जौ गौ ॥ ८ ॥

यस्य पादे तकारभकारौ जकारौ(१) गकारौ च, तद्वृत्तं(२) वसन्ततिलका नाम । तत्रोदाहरणम् ।

तगण. भगण जगण जगण' गु० गु०

उद्धर्षणी(३) जनहशांस्तन भार गुर्व्वी,
४ १६,६२,६४, २५६,५१२, २०४८,(२९३३)

तगण. भगण: जगण. जगण: गु० गु०

नीलोत्पलद्युतिमलिम्लुचलोचना च ।

तगण. भगण. जगण. जगण. गु० गु०

सिंहोन्नतत्रिकतटी कुटिलालकान्ता,

तगण: भगण: जगण' जगण' गु० गु०

कान्ता वसन्ततिलका नृपवल्लभाऽसौ(४) ॥

पादान्ते यतिः ।

---

१ तगणभगणौ जगणाविति ख०, ग०, पुस्तकान्तरपाठः ।

२ तदिति ख०, ग०, पुस्तकान्तरपाठः ।

३ उद्धर्षिणीति ख०, ग०, पुस्तकान्तरपाठः ।

४ उक्तचतुर्दशाक्षरप्रस्तारस्य नवशतत्रयस्त्रिंशदधिकद्विसहस्रतमो भेदो वसन्ततिलकेतिनाम्ना ख्यातः । वसन्ततिलकमिति छन्दोमञ्जरी । अत्र यतिस्थलस्याऽनुक्तत्वात् पादान्ते यतिः कर्त्तव्या । लोचना चेत्यत्र चकारस्य गत्वं इति गुरुत्वं बोध्यम् ।

## (२४८) सिंहोन्नता काश्यपस्य ॥ ९ ॥

इयमेव वसन्ततिलका काश्यपस्याचार्य्यस्य मतेन[1] सिंहोन्नता नाम भवति । पूर्व्वमेवोदाहरणम् ।

## (२४९) उद्धर्षिणी सैतवस्य ॥ १० ॥

इयमेव वसन्ततिलका सैतवस्याचार्य्यस्य मते उर्षिणी नाम । पूर्व्वमेवोदाहरणम् ।

अतिशर्क्वर्य्याम् ।

१ काश्यपमते इति ख०, पुस्तकान्तरपाठश्च । काश्यपस्य मते इति ग० ।

काश्यपेनाचार्य्येण वसन्ततिलका सिंहोन्नतेतिनाम्ना व्यवह्रियते । सिंहोद्धतेति छन्दोमञ्जरी । सैतवेनाचार्य्येणयमेव वसन्ततिलका उद्धर्षिणीतिनाम्ना व्यवह्रियते । अतएव वसन्ततिलकाया एकस्मिन्नेवोदाहरणे सिंहोन्नतोद्धर्षिणीवसन्ततिलकेति त्रीणि नामानि निवेशितानि सन्ति । सजन्मटीकवृत्तरत्नाकरे तु काश्यपमते सिंहोद्धतमिति नाम स्थापितं । पुनरत्रैव रामेण सेयमुदिता मधुमाधवीति सूत्रान्तरमस्ति । अत्र वृत्तरत्नाकरटीकायां 'शोभावतीत्यन्ये' इत्युक्तम् । तथाहि वसन्ततिलकाया मतान्तरलब्धानि सिंहोद्धतोद्धर्षिणीमधुमाधवीशोभावतीति चत्वारि नामानि सन्ति । शर्क्वर्य्यामत्र ग्रन्थे यानि वृत्तान्युक्तानि, ततोऽधिकं मुद्रितवृत्तरत्नाकरे एतद् वृत्तद्वयमस्ति । तद्यथा, इन्दुवदना भजसनैः सगुरुयुग्मैः । द्विःसप्तच्छिदलोला मसौ भौ गौ चरणे चेदिति । मुद्रितच्छन्दोमञ्जर्यान्तु एतद् वृत्तद्वयमधिकमस्ति । तद्यथा, मात्तो नो मो गौ यदि गदिता वासन्तीयम् । स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ इति । वृत्तरत्नाकरपरिशिष्टे तु एतदतिरिक्तान्यपि वृत्तान्युक्तानि, तानि यथा, ननतजगुरुभिः सप्तयतिर्मदौ स्यात् । लक्ष्मीरन्तविरामा मसौ ननगुरुयुग्मम् । चिननगगिति वसुयति सुपवित्रम् । मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ । सजभजला गुरुश्च भवति प्रमदा । मजमा यजौ गिति शरषड्भिर्मञ्जरी । ननभभनैर्गुरुश्च

## (५५०) चन्द्रावर्त्ता नौ नौ स् ॥ ११ ॥

यस्य पादे नकाराश्चत्वारः(१) सकारश्च, तच्चन्द्रावर्त्ता नाम(२) ।

तत्रोदाहरणम् ।

नगण १ नगण २ नगण ३ नगण ४ सगण

पटुजवपवन-चलितजललहरी,

१ २ ४ ८,१६,३२,६४ १२८,२५६,५१२ १०२४ २०४८,४०९६ ८१९२ १६३८४

नगण १ नगण २ नगण ३ नगण ४ सगण

तरलितविहग-निचयरवमुखरम(३) ।

नगण १ नगण २ नगण ३ नगण ४ सगण

विकसितकमल-सुरभिशुचि सलिलं,

नगण १ नगण २ नगण ३ नगण ४ सगण

विचरति पथिक-मनसि शरदि सरः(४) ॥

अत्र स्वरैर्वसुभिश्च यतिरित्याम्नायः ॥

वसुषट्कुमारी । नरनरैर्लगौ च रचितं सुकेसरम् । भौ न्यौ लगौ चेदिह भाति च चन्द्रौरसं । वामन्तीय स्यादिह खलु मतौ न्यौ गौ चेत् । चक्रपदमिह भनमलगयभि, इति । सर्दितच्छन्दोमञ्जर्यान्तु मतनसगगघटितं वासन्तीलक्षणमस्ति । अन्यथातिजगत्यधिकारे पठितया मञ्जुभाषिण्या सह शक्वर्यधिकारे परिशिष्टोक्तया मञ्जर्या मिश्रणाद्विषमाक्षरधर्मिका एववद्दुपजातयो बोध्या ।

१ नकाराश्चत्वार इति ख० पुस्तकान्तरपाठश्च ।

२ तद्वृत्तं चन्द्रावर्त्ता नामेति ख०, ग०, पुस्तकान्तरपाठश्च ।

३ विहगनिवहरवमुखरमिति पुस्तकान्तरपाठः ।

४ षष्ठाक्षरमकारोत्तरमकारीत्युक्तत्वादनिरुक्तेर्या पञ्चदशाक्षरे पादे उपलभ्यते । तत्र

(२५१) मालत्तुनवकौ चेत ॥ १२ ॥

सैव चन्द्रावर्त्ता माला नाम भवति, यदा षष्ठे नवमे च वर्णे(१) यतिः । तत्रोदाहरणम ।

नवविकसित-कुवलयदलनयने,
निशमय नव-जलधरमिह गगणे ।
अपनय रुष, मुपसर मम सविधं,
यदि रतिसुख, मभिलषसि बहुविधम(२) ॥

(२५२) मणिगणनिकरो वसुपयः ॥ १३ ॥

सैव चन्द्रावर्त्ता मणिगुणनिकरो नाम भवति, यदा अष्टभिः सप्तभिश्च यतिः । तत्रोदाहरणम ।

---

वर्णप्रस्तारनियमेन प्रस्तारे कृते सप्तशताष्टपञ्चाशदधिकद्वाविंशतिसहस्रभेदा जायन्ते । तत्र त्रिंशतचतुरशीत्यधिकषोडशसहस्रतमो भेदश्चन्द्रावर्त्तेति नाम्ना ख्यातः । सर्वैकगुरुके पादे चन्द्रावर्त्तेति नाम प्रवृत्तं सत्तत्र मतिर्न प्रदर्शितम् । अतएव ग्रन्थकारादावस्याः शशिकलेति नाम स्थापितम् ।

१ षष्ठे वर्णे नवमे चेति ख०, पुस्तकान्तरपाठश्च ।

२ अत्र चन्द्रावर्त्तालक्षणं समस्तं वर्त्तते । परन्तु च प्रथमं पादस्य षष्ठे ततो नवमे च वर्णे यतिर्भवतीति विशेषः । एतेन गणभेदवद्यतिभेदेऽपि नामभेदो भवतीति सूचितम् । मालतिनाम्नः द्विगुरुवर्णवत्वं नैकगुरुकैतदुदाहरणपादे प्रवृत्तं सत्तत्रमालाख्या तत्र प्रदर्शितमेव । अतएवास्या अन्यग्रन्थकर्तृभिः स्रगिति नामान्तरं स्थापितम् । एवं मणिगुणनिकरेऽपि चन्द्रावर्त्तालक्षणं समस्तं वर्त्तते, परन्तु च पादस्य प्रथममष्टमे ततः सप्तमेऽन्ते यतिर्भवतीति विशेषः । यतिभेदेन नामभेदोऽयमपि ज्ञातव्यः ।

कथमपि निपतितं-मतिमहति पदे
नरमनुसरसि न. फलमनुपचितम् ।
अपि वरयुवतिषु कुचतटनिहतः.
स्पृशति न वपुरिह. मणिगुणनिकरः ॥

(२५३) मालिनी नौ म्यौ य्(१) ॥ १४ ॥

यस्य पादे नकारौ मकारयकारौ यकारश्च भवति, तद्वृत्तं(२) मालिनी नाम, यत्राष्टभिः सप्तभिश्च यतिः(३) । तत्रोदाहरणम् ।

नगण: नगण: मगण यगण: यगण:

अतिविपुलललाटं, पीवरोरः कपाटं,

१ २ ४ ८ १६, ३२ ६४ १२८ ५१२ ४८६

नगण: नगण: मगण यगण: यगण:

सुघटितदशनोष्ठं, व्याघ्रतुल्यप्रकोष्ठम् ।

नगण नगण मगण: यगण: यगण:

पुरुषमशनिलेखा,-लक्षणं वीरलक्ष्मी,-

नगण नगण. मगण यगण. यगण:

रतिसुरभियशोभि,-र्मालिनी चाभ्युपैति(४) ॥

अष्टौ ।

१ म्यौ य् चेति ख॰ । म्यौ य् च वसुषय इति ग॰ ।

२ पादे नगणौ मगणो यगणौ च तद्वृत्तमिति ग॰ पुस्तकान्तरपाठश्च ।

३ पूर्ववद्यतिरिति ख॰ ग॰ पुस्तकान्तरपाठश्च ।

४ चाभ्युपैतीति ख॰ ग॰ च । उक्तपञ्चदशाक्षरप्रस्तारस्य षट्शतद्विसप्तत्युत्तरमेतत् ।

(२५५) **ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥१४॥**

यस्य पादे भकाररेफौ नकारास्त्रयो गकारश्च तद्वृत्तं(1) ऋषभगजविलसितं नाम। सप्तभिर्नवभिश्च यतिः॥ तत्रोदाहरणम्।

भगण रगण नगण नगण नगण गु०

आयतबाहुदण्ड-मुपचितपृथुहृदयं

भगण रगण नगण नगण नगण गु०

पीनकटिप्रदेश-मृषभगजविलसितम्।

सहस्रतमो भेदो मालिनीति नाम्ना ख्यातः। अत्र पादस्य अष्टमे पञ्चदशाक्षरे च यतिर्बोध्या।

अतिशक्वर्यामत्र यानि वृत्तान्युक्तानि मुद्रितवृत्तरत्नाकरे ततोऽधिकमेतानि वृत्तानि सन्ति, तानि यथा, भवति नजौ भजौ रसहितौ प्रभद्रकम्। सजसा सयौ शरदश-यतिरियमेला। मौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा इति। एतत्परिशिष्टे तु प्रभद्रकस्य सुकेसरमिति नाम स्थापितम्। मुद्रितछन्दोमञ्जर्याम् इतोऽधिकान्ये-तानि वृत्तानि सन्ति, तानि यथा, एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलम्। विपिन-तिलकं नसनरेफयुगलैर्भवेत्। तूणकं समानिकापदद्वयं विनान्तिमम्। चित्रा नाम छन्दश्चित्रसंज्ञं त्रयो मा यकारौ इति। वृत्तरत्नाकरपरिशिष्टे लीलाखेलस्य कामक्रीडेति नाम स्थापितम्। इतोऽप्यधिकानि वृत्तरत्नाकरपरिशिष्टे उक्तानि वृत्तानि यथा, ननतभरलताष्टस्वरैरुपमालिनी। ऋषभाख्यमेतदुदितं सजसाः सयौ चेत्। विपि-नतिलकं नसनरेफयुगलैर्भवेत्। कथयन्ति मानसहंसनाम सजौ जभर्। सगणैः शिववक्त्रमितैर्गदिता नलिनी। अत्र शिशुपालवधमिदं भजननाय। इन्दुवदनाभिधा नौ स सौ विरामः स्वराष्टाविति। अत्र तोटकमलिन्यो मत्तवादिषु मात्ररसविकाः पूर्ववदुपजातयो बोध्याः।

१ भभरमगणौ नगणाद्वयो मकारश्च भवति तदिति क०, ग०, पुस्तकान्तरपाठश्च।

भगणः रगणः नगणः नगणः नगणः गु०

वीरमुदारसत्त्व-मतिशयगुणरसिकं,

भगणः रगणः नगणः नगणः नगणः गु०

श्रीरतिचञ्चलापि, न परिहरति पुरुषम् (१) ॥

अष्टौ ।

१ चतुःषष्ठ्यक्षरसंख्यैरित्युक्तत्वेनाष्टेः षोडशाक्षरः पादो भवति । तस्य वर्णप्रस्तार-नियमेन प्रस्तारे कृते सर्वगुर्वादिसर्वलघ्वन्ताः पञ्चशतषट्त्रिंशदधिकपञ्चषष्टिसहस्र भेदा जायन्ते । तत्र सप्तशतसप्तविंशदधिकद्वात्रिंशत्सहस्रतमो भेद ऋषभगज-विलसितेतिनाम्ना प्रसिद्धः अत्र पादस्य सप्तमे षोडशाक्षरे च यतिः कर्त्तव्या । गजतुरगविलसितमित्यन्यत्र नामान्तरमस्य ।

अष्टावत्र यच्छन्दः कथितं ततोऽधिकं मुद्रितवृत्तरत्नाकरे वृत्तमेकमुक्तम्, तद्यथा, नजभजरैः सदा भवति वाणिनी गयुक्तैरिति । मुद्रितच्छन्दोमञ्जर्यान्तु-तदधिकानि वृत्तान्युक्तानि यथा, चित्रसञ्ज्ञमीरितं समानिकापदद्वयं तु । भात् सगतनगैरष्टच्छेदे स्यादिह चकिता । भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः । यमौ नः सौ गश्च प्रवरललितं नाम वृत्तम् । द्विगुणितवसुलघुभि-रचलधृतिरिह । गरुडरुतं नजौ भजतगा यदा स्युस्तदा, इति । वृत्तरत्नाकरपरिशिष्टे तु भः सतभनगा यस्यां साष्टच्छेदिह चकितेति चकितालक्षणं । इतोऽप्यधिकानि वृत्तानि वृत्तरत्नाकरपरिशिष्टे प्रोक्तानि, यथा, चित्रसञ्ज्ञमीरितं रजौ रजौ रगौ च वृत्तम् । जरौ जरौ ततो जगौ च पञ्चचामरं वदेत् । मङ्गयिता भरौ नरनगाश्च धीरल-लिता । पञ्चभकारयुताश्वगतिर्यदि चान्तगरु । नजरभैर्न गेन च स्यान्मणिकल्पलता । ऋषिरसर्वे सा राजन्ते ब्रह्माद्यन्तरूप नाम । वेदाङ्कैर्मदनललिता सो भो नमलसाः । भो रयना सगौ च यस्या वरयुवतिरियम् इति । लघुगुरुनिरन्तरं यदा स पञ्च-चामरम् । पञ्चभकारयुताश्वगतिर्यदि चान्तगुरुः । इति सूत्रद्वयं भट्टव्यासमुद्रित-सटीकवृत्तरत्नाकरे अष्ट्यधिकारे मूल एव पठितम् । एतेषां मूलवदुद्दिष्टक्रियानु-सारेण प्रस्तारभेदसङ्ख्यानिर्देशः करणीयः । अतिशक्वर्यधिकारे परिशिष्टोक्तेन सुखेलकवृत्तेन एव अष्ट्यधिकारे छन्दोमञ्जर्युक्तस्य गरुडरुतवृत्तस्य भिन्नत्वात् पूर्व-वद्विषमाक्षरयतिका उपजातयो बोद्धव्याः ।

अथाष्टौ ।

(१५५) हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः(१) ॥१५॥

यस्य पादे नकारसकारमकाररेफाः सकारलकारगकाराश्च,(२) तद्वृत्तं हरिणी नाम । षड्भिश्चतुर्भिः सप्तभिश्च यतिः ॥ तत्रोदाहरणम् ।

कुवलयदल-श्यामा पीनोन्नतस्तनशालिनी,
चकितहरिणी-नेत्रच्छाया-मलिम्लुचलोचना ।
मनसिजधनु-र्ज्यानिर्घोषै-रिव श्रुतिपेशलै-
र्मनसि ललना लीलालापैः करोति ममोत्सवम् ॥

एतद्वृषभविलसितमित्यपरे ।

(१५६) पृथ्वी जसौ जसौ यलौ ग् वसुनवकौ ॥ १६ ॥

यस्य पादे जकारसकारौ पुनस्तौ यकारलकारगकाराश्च, तद्वृत्तं पृथ्वी नाम(३) । अष्टभिर्नवभिश्च यतिः ॥ तत्रोदाहरणम् ।

हृताः समिति शत्रव-स्त्रिभुवने प्रकीर्णं यशः,
कृतश्च गुणिनां गृहे, निरवधिर्महानुत्सवः ।

१ रसयुगहयैरिति पुस्तकान्तरपाठः ।

२ नगणसगणमगणरगणसगणलकारगकाराश्चेति ख०, ग० च ।
नकारसकारमकाररकारसकारलकारगकाराश्च भवन्तीति पुस्तकान्तरपाठः ।

३ जगणसगणौ पुनर्जगणसगणौ यगणलकारगकाराश्च यत्र पृथ्वी नामेति ख०, पुस्तकान्तरपाठश्च ।

त्वया कृतपरिग्रहे, सुदिनवीरसिंहासने (१)
नितान्तनिरवग्रहा, फलवती च पृथ्वी कृता ॥

(२५७) वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिगृषयः ॥ १७ ॥

यस्य पादे भकाररेफनकारभकारनकारलकारगकारा(२) भवन्ति, तद्वृत्तं वंशपत्रपतितं नाम। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

अद्य कुरुष्व कर्म्म सुकृतं, यदि परदिवसे,
मित्र विधेयमस्ति भवतः, किमु चिरयसि तत्।
जीवितमल्पकालकलना,-लघुतरतरलं,
नश्यति वंशपत्रपतितं, हिमसलिलमिव ॥

(२५८) मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्त्तुस्वराः ॥१८॥

यस्य पादे मकारभकारनकारतकारतकारा(३) गकारौ च, तन्मन्दाक्रान्ता नाम। चतुर्षु षट्सु सप्तसु च यतिः। तत्रोदाहरणम्।

प्रत्यादिष्टं, समरशिरसः, कान्दिशं प्राप(४)नष्टं,
त्वं निःशेषं, कुरु रिपुबलं, मार्गमासाद्य सद्यः।

---

१ सुदिनवीरसिंहासने इति ग०, पुस्तकान्तरपाठश्च।

२ भमयरेफनगणभगणनगणलकारगकाराश्च तदिति ख०, पुस्तकान्तरपाठश्च।

३ मभनततगगाविति ख०, पुस्तकान्तरपाठश्च।

४ कान्दिशीभूयेति ख०, पुस्तकान्तरपाठश्च।

किं नाश्रौषीः, परिणतधियां नीतियोग्योपदेशं(१)
मन्दाक्रान्ता, भवति फलिनी, वारिलक्ष्मीः क्षयाय ॥

(२८९) शिखरिणी यमौ न्सौ भ्लौ गृतुरुद्राः ॥ १९ ॥

यस्य पादे यकारमकारनकारसकारभकारलकारगकारा-स्तद्वृत्तं(२) शिखरिणी नाम। षट्स्वेकादशसु च यतिः। तत्रोदाहरणम्।

यशःश्रेणीभर्त्तृ, हृदि गगननाथे(३) गुणनिधौ,
प्रवृत्ते वैराग्ये, विषयरसनिष्क्रान्तमनसाम्।
इदानीमस्माकं, घनतरुलतां निर्झरवतीं,
तपस्तप्तुं चेतो, भजति गिरिमालां शिखरिणीम् ॥

धृत्याम्(४)।

(२९०) कुसुमितलतावेल्लिता म्तौ न्यौ यावब्धिरसर्त्तुस्वराः॥२०॥

यस्य पादे मकारतकारनकारा यकारद्वयञ्च तद्वृत्तं(५) कुसुमितलतावेल्लिता नाम। पञ्चसु षट्सु सप्तसु च यतिः॥ तत्रोदाहरणम्।

---

१ नीतिमार्गोपदेशमिति ख०, ग० च।

२ यगणमगणनगणसगणभगणलकारगकाराश्च भवन्ति तद्वृत्तमिति ख०, ग०, पुस्तकान्तरपाठश्च।

३ तुहिनरजनाथे इति ख०, ग०, पुस्तकान्तरपाठश्च।

४ धृताविति ख०, पुस्तकान्तरपाठश्च।

५ मगणतगणनगणयगणा यगणौ च तदिति ख०, पुस्तकान्तरपाठश्च।

धन्यानामेताः, कुसुमितलताः वेल्लितोत्फुल्लवृक्षाः,
सोत्कण्ठं कूजत्,-परभृतकला,-लाप(१) कोलाहलिन्यः ।
मध्वादौ माद्यन्,-मधुकरकुलोद्गीतझङ्काररम्या,(२)
ग्रामान्त:स्रोतः,-परिसरभुवः, प्रीतिमुत्पादयन्ति ॥

अतिधृतौ ।

(१११) शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः ॥२१॥

यस्य पादे मकारसकारौ जकारसकारौ तकारौ गकारश्च भवति, तद्वृत्तं(३) शार्दूलविक्रीडितं नाम । द्वादशभिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।

कम्बुग्रीवमुदग्रबाहुशिखरं, रक्तान्तदीर्घेक्षणं,
शालप्रांशुशरीरमायतभुजं, विस्तीर्णवक्षःस्थलम् ।
कोलस्कन्धमनुद्धतं(४) परिजने, गम्भीरमत्यस्वरं,(५)
राज्यश्रीः समुपैति वीरपुरुषं, शार्दूलविक्रीडितम् ॥

इदानीं कृतिः प्रकृतिराकृतिः विकृतिः संकृतिरतिकृतिरुत्कृतिश्चेति(६) सप्तकृतयः क्रमेणैकाक्षरवृद्ध्योदाह्रियन्ते ॥

---

१ परभृतकुलालापेति ख०, ग०, पुस्तकान्तरपाठः ।

२ मधुकरकुलोद्गीतभङ्कारम्येति ख०, पुस्तकान्तरपाठः ।

३ मगणसगणौ जगणसगणौ तगणौ गकारश्च तदिति पुस्तकान्तरपाठः ।

४ कोलस्कन्धसमुद्धतमिति ख०, ग०, पुस्तकान्तरपाठः ।

५ गम्भीरसिंहस्वरमिति ख०, ग०, पुस्तकान्तरपाठः ।

६ संकृतिरभिकृतिश्चेतीति ख०, ग०, पुस्तकान्तरपाठः ।

तत्र कृतौ।

(२६०) सुवदना म्रौ भ्नौ यभौ लगावृषिस्वरर्त्तवः ॥२२॥

यस्य पादे मकाररेफभकारनकारयकारभकारलकारगकारा भवन्ति तद्वृत्तं(१) सुवदना नाम। सप्तसु सप्तसु षट्सु च यतिः। तत्रोदाहरणम्।

या पीनोद्गाढतुङ्ग-स्तनजघनघना,-भोगालसगति,-
र्यस्याः कर्णावतंसो,-त्पलरुचिजयिनी, दीर्घे च नयने।
श्यामा सीमन्तिनीनां, तिलकमिव मुखे, या च त्रिभुवने,
सम्प्राप्ता साम्प्रतं मे, नयनपथमसौ, दैवात् सुवदना॥

(२६१) ग्लिति वृत्तम् ॥ २३ ॥

यस्य पादे गकारलकाराः क्रमेण भवन्ति तद्वृत्तं नाम वृत्तम(२)। कृतिप्रकारेण(३) यावद्भिरेव विंशत्यक्षराणि पूर्य्यन्ते तावतां(४) ग्लां ग्रहणम(५)। तत्रोदाहरणम्।

जन्तुमात्रदुःखकारि कर्म्म निर्मितं भवत्यनर्थहेतु
तेन सर्व्वमात्मतुल्यमीक्षमाण उत्तमं सुखं लभस्व।

---

१ मगणरगणभगणनगणयगणभगणलकारगकाराश्च सदिति ख०, ग०, पुस्तकान्तर-पाठश्च।

२ तद्वृत्तं वृत्तं नामेति ख०, ग०, पुस्तकान्तरपाठश्च।

३ कृतिप्रकरणे इति ग०।

४ तावतामेवेति ग०, पुस्तकान्तरपाठश्च।

५ ग्रहणं विंशत्या गुरुभिर्लघुभिश्चेति ग०।

विद्धि बुद्धिपूर्व्वकं ममोपदेशवाक्यमेतदादरेण
वृत्तमेतदुत्तमं[१] महाकुलप्रसूतजन्मनां हिताय[२] ॥

अत्र पादान्ते यतिः ।

प्रकृतौ ।

(२६४) स्रग्धरा म्रौ भ्नौ यौ य् त्रिः सप्तकाः ॥ २४ ॥

यस्य पादे मकाररेफभकारनकारास्त्रयश्च यकारा भवन्ति तद्वृत्तं[३] स्रग्धरा नाम । सप्तसु सप्तसु सप्तसु च यतिः ॥

तत्रोदाहरणम् ।

रेखा भ्रूः शुभ्रदन्त-द्युतिहसितशर-चन्द्रिकाचारुमूर्त्ति-
र्मायन्मातङ्गलीला-गतिरतिविपुला-भोगतुङ्गस्तनी या ।
रम्भास्तम्भोपमोरू-रलिमलिनघन-स्निग्धधम्मिल्लहस्ता
विम्बोष्ठी रक्तकण्ठो, दिशतु रतिसुखं, स्रग्धरा सुन्दरीयम् ॥

आकृतौ ।

(२६५) मद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥ २५ ॥

यस्य पादे भकाररेफौ नकाररेफौ पुनर्नकाररेफौ नकार-गकारौ[४] च भवतस्तद्वृत्तं मद्रकं नाम । दशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम् ।

---

१ इत्तमुत्तममिति ख०, पुस्तकान्तरपाठश्च ।

२ सदा हितायेति ख०, पुस्तकान्तरपाठश्च ।

३ मगणरगणभगणनगणास्त्रयश्च यगणास्तदिति ख०, ग०, पुस्तकान्तरपाठश्च ।

४ भगणरगणौ नगणरगणौ पुनर्नगणरगणौ नगणगकारौ इति पुस्तकान्तरपाठः ।

मद्रकगीतिभिः सकृदपि, स्तुवन्ति भवाय भवन्तमभवं,
भक्तिभरावनम्रशिरसः, प्रणम्य तव पादयोः सुकृतिनः ।
ते परमेश्वरस्य पदवी,-मवाप्य सुखमाप्नुवन्ति विपुलं,
मर्त्यभुवं स्पृशन्ति न पुन,-र्मनोहरसुराङ्गनापरिवृताः ॥

विकृतौ ।

(२६६) अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः ॥२६॥

यस्य पादे नकारजकारौ भकारजकारौ पुनर्भकारजकारौ भकारलकारौ गकारश्च(१) तद्वृत्तमश्वललितं नाम । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम् ।

पवनविधूतवीचिचपलं, विलोकयति जीवितं तनुभृतां,
वपुरपि हीयमानमनिशं, जरावनितया वशीकृतमिदं ।
सपदि निपीडनव्यतिकरं, यमादिव नराधिपान्नरपशुः,
परवनितामवेक्ष्य कुरुते, तथापि हतबुद्धिरश्वललितम् ॥

(२६७) मत्ताक्रीडा मौ त्नौ नौ न्लौ ग्वसुपञ्चदशकौ ॥२७॥

यस्य पादे मकारौ तकारनकारचतुष्कं लकारगकारौ च(२) तद्वृत्तं मत्ताक्रीडा नाम । अष्टाभिः पञ्चदशभिश्च यतिः । तत्रोदाहरणम् ।

---

(१) नगणजगणौ भगणजगणौ पुनर्भगणजगणौ भगणो लकारगकारौ च भवत इति पुस्तकान्तरपाठः ।

२ मगणौ तगणो नगणचतुष्कं लकारगकारौ चेति म०, पुस्तकान्तरपाठश्च ।

हृद्यं मद्यं पीत्वा नारी, स्खलितगतिरतिशयरसिकहृदया,
मत्ताक्रीडालोलैरङ्गै-र्मदमखिलविटजनमनसि कुरुते।
वीतक्रीड़ाश्लीलालापै(१) श्रवणसुखसुभगसुलजितवचना,
नृत्यैर्गीतैर्भ्रूविक्षेपैः, कलभणितविविधविहगकुलरुतैः॥

मत्ताक्रीडा।

(२९८) तन्वी भतौ न्सौ भौ न्याविन्द्रियस्वरमासाः॥२८॥

यस्य पादे भकारतकारनकारसकारा भकारौ नकारयकारौ च(२) तद्वृत्तं तन्वी नाम। पञ्चसु सप्तसु द्वादशसु च यतिः॥

तत्रोदाहरणम्।

चन्द्रमुखी सु-न्दरघनजघना, कुन्दसमानशिखरदशना या,
निष्कलवीणा-श्रुतिसुखवचना, त्रस्तकुरङ्गतरलनयनान्ता(३)॥
निर्मुखपीनोन्नतकुचकलसा-मत्तगजेन्द्रललितगतिभावा,(४)
निर्भरलीला(५)निधुवनविषये(६)मुञ्जनरेन्द्र भवतु तव तन्वी॥

अभिकृती।

१ वीतक्रीडाश्लीलैरालापैरिति ख०, पुस्तकान्तरपाठश्च।

२ भगणतगणौ नगणसगणौ भगणौ नगणयगणौ च भवत इति ग०, पुस्तकान्तरपाठश्च।

३ नयना चेति ख०, ग०, पुस्तकान्तरपाठश्च।

४ ललितगमना चेति ख०, ग०, पुस्तकान्तरपाठश्च।

५ निर्भरलीलेति ग०, पुस्तकान्तरपाठश्च।

६ निधुवनविषये इति ख०, पुस्तकान्तरपाठश्च।

(२२९) क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग्भूतेन्द्रियवसुपयः ॥२९॥

यस्य पादे भकारमकारसकारभकारा नकाराश्च चत्वारो(१) गकारश्च भवति, तद्वृत्तं क्रौञ्चपदा नाम । पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।

या कपिलाक्षी, पिङ्गलकेशी, कलिरुचिरनुदिन,-मनु-नयकठिना,

दीर्घतराभिः, स्थूलशिराभिः, परिवृतवपुरति,-शय-कुटिलगतिः ।

आयतजङ्घा, निम्नकपोला, लघुतरकुचयुग,-परिचित-हृदया,

सा परिहार्य्या, क्रौञ्चपदा स्त्री, ध्रुवमिह निरवधि, सुखमभिलषता ॥

उत्कृतौ ।

(२३०) भुजङ्गविजृम्भितं मौ त्नौ नौ सौ लगौ वसुरुद्र-र्षयः ॥ ३० ॥

यस्य पादे मकारो तकारनकारो नकारो रेफसकारो

---

१ भमसभमसौ नमनभमनौ नमश्चाश्चत्वार इति पुस्तकान्तरपाठः । भमसभा नाश्च-त्वार इति ख० ।

लकारगकारौ च(१) तद्वृत्तं भुजङ्गविजृम्भितं नाम। अष्टभिरेकादशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

ये सन्नद्धानेकानीकै,-र्नरतुरगकरिपरिवृतैः, समं तव शत्रवो,

युद्धश्रद्धालुब्धात्मान;-स्त्वदभिमुखमपगतभियः,-पतन्ति धृतायुधाः।

ते त्वां दृष्ट्वा सङ्ग्रामाग्रे, तुङ्गिगनृप कृपणमनसः, फलन्ति(२) दिगन्तरं

किं वा सोढुं शक्यन्ते कै,-र्वङ्कभिरपि सविषविषमं, भुजङ्गविजृम्भितम्॥

अत्र कात्यायनेनाप्युक्तं।

ध्यानैकाग्रा लम्बा दृष्टिः,(३) कमलमुखि लुलितमलकं, करे स्थितमाननं,

चिन्ताशक्ता शून्या बुद्धि,-र्विरहगतिपतितरसना, तनुस्तनानां गता।

---

१ मगणौ तगणनगणौ पुनर्नगणौ रगणसगणौ लकारगकारौ च भवत इति ग०, पुस्तकान्तरपाठश्च।

२ क्षयमुपगच्छन्ति इति ग०, पुस्तकान्तरपाठश्च।

३ दीना दृष्टिरिति ख०, पुस्तकान्तरपाठश्च।

पाण्डुच्छायं क्षामं वक्त्रं, मदजननि रहसि सरसां,[1]
करोषि न सङ्कथां,

को नामायं वम्यो व्याधि,-स्तव[2] कथय सुतनु
किमिदं, न खल्वसि नातुरा ॥

(२७१) अपवाहको म्नौ नौ नौ न्सौ गौ नवर्त्तुरसे-
न्द्रियाणि[3] ॥ ३१ ॥

यस्य पादे मकारः षण्नकाराः सकारो गकारौ च[4] तद्वृत्त-
मपवाहको नाम । नवसु षट्सु षट्सु पञ्चसु च यतिः । तस्योदा-
हरणम् ।

श्रीकण्ठं त्रिपुरदहन,-ममृतकिरण,-सकलकलित,-
शिरसं रुद्रं,

भूतेशं हृतमुनिमख,-मखिलभुवन,-नमितचरण,-युग-
मीशानम् ।

सर्व्वज्ञं वृषभगमन,-महिपतिकृत,-वलयरुचिर,-कर-
माराध्यं,

तं वन्दे भवभयभिद,-मभिमतफल,-वितरणगुरु,-
मुमया युक्तम् ॥

१ रहसि रमसे इति ख०, पुस्तकान्तरपाठश्च ।

२ रम्यो व्याधिस्तवेति पुस्तकान्तरपाठः ।

३ नववर्त्तुरसेन्द्रियाणीति पुस्तकान्तरपाठः ।

४ मगणो नगणाः षट् सगणो गकारौ च भवत इति ख०, पुस्तकान्तरपाठश्च ।

कृतयः समाप्ताः ॥

(२७१) दण्डको नौ रः ॥ ३२ ॥

इदानीं दण्डकजातयः कथ्यन्ते। यत्र पादे द्वौ नकारौ रेफाश्च सप्त[1] भवन्ति, दण्डको नाम सः। उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरत्वमेव युक्तम्। सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेः। इत ऊर्द्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः। दण्डको नौ र इति श्रवणात्। तत्रोदाहरणम्।

इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणी,

त्रिदशविजयिवीर्य्यदृप्तात्[2] दशग्रीवलक्ष्मीविरामेण रामेण संसेविते[3]।

जनकयजनभूमिसम्भूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे,

भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले ॥

अत्र पादान्ते यतिः।

---

१ नगणौ रगणाः सप्तेति ख०, ग०, पुस्तकान्तरपाठश्च।

२ वीर्यदीप्तेति ग०, पुस्तकान्तरपाठश्च।

३ संसेविते इति ख०, ग०, पुस्तकान्तरपाठश्च।

(२०३) प्रथमश्चण्डवृष्टिप्रपातः ॥ ३३ ॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स चण्डवृष्टिप्रपातो नाम(१)। पूर्वमेवोदाहरणम्।

(२०४) अन्यत्र रातमाण्डव्याभ्याम् ॥ ३४ ॥

रातमाण्डव्याभ्यां ऋषिभ्यामन्यथास्याभिधान-
मेतदेव ताभ्यां पुनरन्यैव सञ्ज्ञा कृतास्य वृत्तस्य।
रातमण्डव्यग्रहणं पूजार्थम्।

(२०५) शेषः प्रचित इति ॥ ३५ ॥

इतश्चण्डवृष्टिप्रपातादूर्ध्वं दण्डकप्रस्तारः(२) प्रचित इति सञ्ज्ञां लभते, पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता। इदानीन्तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। तत्रोदाहरणम्।

प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः
पिङ्गलाचार्य्यनाम्नो मतः,
प्रचित इति ततः परं दण्डकानामियं जातिरेकैक-
रेफाभिवृद्ध्या यथेष्टं भवेत्।
स्वरुचिरचितसञ्ज्ञया तद्विशेषैरशेषैः पुनः काव्य-
मन्येऽपि कुर्व्वन्तु वागीश्वराः,

---

१ नाम भवतीति क॰, पुस्तकान्तरपाठश्च।

२ शेषो दण्डकप्रस्तार इति पुस्तकान्तरपाठः।

भवति यदि समानसङ्ख्याक्षरैर्यत्र पादव्यवस्था
ततो दण्डकः पूज्यतेऽसौ जनैः ॥

अत्र पादान्ते यतिः । इति दण्डकाः समाप्ताः ।

इति हलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ सप्तमाध्यायः ॥

(२७६) अत्रानुक्तं गाथा ॥ १ ॥

अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः प्रयोगे च दृश्यते तद् गाथेति मन्तव्यम् । [1]तत्र त्रिष्टुभि ।

(२७७) कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ॥ २ ॥

यस्य पादे भगणतगणौ नगणो गकारौ च भवतस्तद्वृत्तं कुड्मलदन्ती नाम । पञ्चभिः षड्भिश्च यतिः । तत्रोदाहरणम् ।

कुड्मलदन्ती, विकटनितम्बा, किन्नरकण्ठी, लघुतरमध्या।
बिम्बफलोष्ठी, मृगशिशुनेत्रा, मित्र भवन्तं सुखयतु कान्ता ॥

जगत्याम् ।

(२७८) वरतनुर्न्जौ ज्रौ षड् रसाः ॥ ३ ॥

यस्य पादे नगण-जगणौ जगण-रगणौ च, तद्वृत्तं वरतनुर्नाम । षड्भिः षड्भिश्च यति. । तत्रोदाहरणम् ।

---

१ निम्नलिखितं सूत्रजातं वृत्तिकारेणैव कृतं नैतन्मूलपुस्तकेषु दृश्यते ।

अयि विजहीहि, दृढोपगूहनं, त्यज नवसङ्गमभीरुवल्लभम्।
अरुणकरोद्गम,-म एष वर्त्तते, वरतनु सम्प्रवदन्ति कुक्कुटाः॥

(१७९) जलधरमाला म्भौ स्मौ समुद्रवसवः॥४॥

यस्य पादे मगणभगणौ सगण-मगणौ च भवतस्तद्वृत्तं जलधरमाला नाम। चतुर्भिरष्टाभिश्च यतिः। तत्रोदाहरणम्।

धत्ते शोभां, कुवलयदाम्नः श्यामा,
शैलोत्सङ्गे, जलधरमाला लीना।
विद्युल्लेखा, कनककृतालङ्कारा,
क्रीडासुप्ता, युवतिरिवाङ्के पत्युः॥

(१८०) गौरी नौ रौ॥५॥

यस्य पादे नगणौ रगणौ च भवतस्तद्वृत्तं गौरी नामेति गाथा। पादान्ते यतिः॥ तत्रोदाहरणम्।

प्रणमति चरणारविन्दद्वयं, त्रिभुवननमितस्य गौरीपतेः।
सकृदपि मनसैव यः सेवितः, प्रवितरति यथेष्टमष्टौ गुणान्॥

इयमेव गौरी दण्डकात् पूर्व्वञ्च एकैकरेफवृद्धया नामान्तराणि लभते।

(१८१) ललना भतौ न्सौ इन्द्रियर्षयः ॥ ६ ॥

यस्य पादे भगणतगणौ नगणसगणौ च भवतस्तद्वृत्तं ललना नाम गाथा। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

या कुचगुर्वी, मृगशिशुनयना, पीननितम्बा, मद-
करिगमना।
किन्नरकण्ठी, सुरुचिरदशना, सा तव सौख्यं, वितरतु
ललना ॥

अतिजगत्याम्।

(१८२) कनकप्रभा स्जौ स्जौ ग् ॥ ७ ॥

यस्य पादे सगणजगणौ पुनः सगणजगणौ गकारश्च, तद्वृत्तं कनकप्रभा नाम गाथा। पादान्ते यतिः॥ तत्रोदाहरणम्।

कनकप्रभा पृथुनितम्बशालिनी,
विपुलस्तनी हरिणशावकेक्षणा।
इयमङ्गना नयनयोः पथि स्थिता
कुरुते न कस्य मदनातुरं मनः ॥

(१८३) कुटिलगतिर्नौ तौ ग् स्वरर्त्तवः ॥ ८ ॥

यस्य पादे नगणौ तगणौ गकारश्च भवति, तद्वृत्तं कुटिलगतिर्नाम गाथा। सप्तभिः षड्भिश्च यतिः॥ तत्रोदाहरणम्।

अधरकिसलये, कान्तदन्तक्षते,
हरिणशिशुदृशां, नृत्यति भ्रूयुगम् ।
ध्रुवमिदमुचितं, यदिपत्नौ सता,-
मतिकुटिलगतेः, स्यान्महानुत्सवः ॥

शक्वर्याम् ।

( १८४ ) वरसुन्दरी भजौ सौ गौ ॥ ९ ॥

यस्य पादे भगणजगणसगणसगणा गकारौ च भवतस्तद्वृत्तं वरसुन्दरी नाम गाथा । पादान्ते यतिः । तत्रोदाहरणम् ।

स्वादुशिशिरोज्ज्वलसुगन्धिजलपूर्णं,(१)
वीचिचयचञ्चलविचित्रशतपत्रम् ।
हंसकलकूजितमनोहरतटान्तं,
पश्य वरसुन्दरि सरोवरमुदारम् ॥

( १८५ ) कुटिला(२) म्भौ न्यौ गौ वेदर्त्तुसमुद्राः ॥ १० ॥

यस्य पादे मगणभगणनगणयगणगकारौ च भवतस्तद्वृत्तं कुटिला(३) नाम गाथा । चतुर्भिः षड्भिश्चतुर्भिश्च यतिः । तत्रोदाहरणम् ।

---

१ स्वादम्बुसुगन्धिजलैः सुपरिपूर्णमिति पुस्तकान्तरपाठः ।

२,३ कुटिलमिति पुस्तकान्तरपाठः ।

अध्वस्थानां(१), जनयति सुख,-मुच्चैः कूजन्,
दात्यूहोऽयं, पथि निचुलनि,-तोयोपान्ते ।
कर्णाटस्त्री,-रतिकुहरित,-तुल्यच्छेदै,-
र्नादैः कण्ठ,-स्खलनकुटिल,-मन्द्रावर्त्तैः ॥

अष्टौ ।

(२८६) शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाः ॥ ११ ॥

यस्य पादे भगणरगणौ नगणभगणौ भगणो गकारश्च भवति तदुक्तं शैलशिखा नाम गाथा । पञ्चभिः षड्भिः पञ्चभिश्च यतिः । क्वचित् पादान्ते यतिं पठन्ति । तस्योदाहरणम् ।

शैलशिखानि,-कुञ्जशयितस्य, हरेः श्रवणे,
जीर्णतृणं क,-रेण निदधीत,(२) कपिश्चपलः ।
क्षुद्रवधाप,-वादपरिहार,-विनीतमते,-
स्तस्य नताव,-नैव लघुता हि,-पयूथभिदः ॥

(२८७) वरयुवती भ्रौ य्नौ न्गौ ॥ १२ ॥

यस्याः पादे भगणरगणौ यगणनगणौ नगणो गकारश्च भवति, तदुक्तं वरयुवती नाम गाथा । पादान्ते यतिः । तस्योदाहरणम् ।

---

१ पथ्यस्थानामिति पुस्तकान्तरपाठः ।

२ निदधातीति ग० ।

कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला,
पार्व्वणशर्व्वरीशगर्व्वापहमुखकमला।
पीननितम्बविम्बसंवाहनशिथिलगतिः,
मुञ्जनराधिराज भूयात्तव वरयुवतिः॥

अत्यष्टौ।

(१८८) अतिशायिनी सौ भ्भौ ज्गौ ग् दिक्स्वराः॥१३॥

यस्य पादे सगणौ जगणभगणौ जगणो गकारौ च भवत-स्तद्वृत्तं अतिशायिनी नाम गाथा। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।

इति धौतपुरन्ध्रिमत्सरान्, सरसि मज्जनेन,
श्रियमाप्तवतोऽतिशायिनी,-मपमलाङ्गभासः।
अवलोक्य तदैव यादवा,-नपरवारिराशेः,
शिशिरेतररोचिषाप्यपां, ततिषु मङ्क्तुमीषे(१)॥

(१८९) अवितथं न्जौ भ्जौ ज्लौ ग्॥१४॥

यस्य पादे नगणजगणौ भगणजगणौ जगणलकारौ गकारश्च भवति, तद्वृत्तमवितथं नाम गाथा भवति। यतिः पादान्ते। तत्रोदाहरणम्।

---

१ माघस्य ८ सर्गे ७१ श्लोकः।

श्रुतिपरिपूर्ण[१] वक्त्रमतिसुन्दरवाग्विभवं,
तमखिल[२] जैमिनीयमतसागरपारगतम्।
अवितथवृत्तविप्रजनपूजितपादयुगं,
पितरमहं नमामि वरुरूपमुदारमतिम्॥

(२९०) वस्विन्द्रियसमुद्राश्चेत् कोकिलकम्॥ १५॥

यस्य पादे पूर्व्वोक्ता गणा भवन्ति, अष्टाभिः पञ्चभिश्च तुर्भिश्च यतिर्भवति, तद्वृत्तं कोकिलकमिति गाथा। तत्रोदाहरणम्।

नवसहकारपुष्प,-मधुनिष्कल,-कण्ठतया,
मधुरतरस्वरेण, परिकूजति, कोकिलकः।
प्रथमककारविद्ध,-वचनैर्धन,-लुब्धमते,
तवगमनस्य भङ्ग,-मिव सम्प्रति, कर्त्तुमनाः॥

धृतौ।

(२९१) विबुधप्रिया रसौ जौ भ्रौ वसुदिशः॥ १६॥

यस्य पादे रगणसगणौ जगणौ भगणरगणौ च भवतस्तद्वृत्तं विबुधप्रिया नाम गाथा भवति। अष्टाभिर्दशभिश्च यतिः। तत्रोदाहरणम्।

---

१ श्रुतिपरिपूतेति पुस्तकान्तरपाठः।

२ प्रमखिलेति पुस्तकान्तरपाठः।

कुन्दकुड्मलकोमल,-द्युतिदन्तपङ्क्तिविराजिता,
हंसगद्गदवादिनी, वनिता भवेद्विबुधप्रिया ।
पीनतुङ्गपयोधर,-द्वयभारमन्थरगामिनी,
नेत्रकान्तिविनिर्जित,-श्रवणावतंसितकैरवा ॥

( १९१ ) नाराचकं नौ रौ रौ ॥ १७ ॥

यस्य पादे नगणौ रगणाश्चत्वारो भवन्ति, तद्वृत्तं नाराचकं नाम गाथा । दशभिरष्टभिश्च यतिः । तत्रोदाहरणम्(१) ।

रघुपतिरपि जातवेदो,-विशुद्धां प्रगृह्य प्रियां,
प्रियसुहृदि विभीषणे सङ्क्रमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेना,-नुयातःससौमित्रिणा,
भुजविजितविमानरत्ना,-धिरूढः प्रतस्थे पुरीम् ॥

अतिधृतौ ।

( १९२ ) विस्मिता य्मौ न्सौ रौ गसर्त्तुस्वराः ॥ १८ ॥

यस्यपादे यगणमगणौ नसगणौ रगणौ गकारश्च भवति, तद्वृत्तं विस्मिता नाम गाथा । षड्भिः षड्भिः सप्तभिश्च यतिः । तत्रोदाहरणम्(२) ।

---

१ रघुवंशे ।

२ माघे ।

श्रिया जुष्टं दिव्यैः, सपटहरवै,-रन्वितं पुष्पवर्षै,-

र्वपुष्टश्चैवास्य, स्तामृषिगणै, स्तयमानं निरीय।

प्रकाशेनाकाशे, दिनकरकरान्, विक्षिपद्विस्मिताक्षै,-

र्नरेन्द्रैरौपेन्द्रं, वपुरथ विशु,-द्वामभीत्ताम्बभूवे ॥

(१९४) शशिवदना न्जौ भ्जौ ज् ज्गौ रुद्रदिशः ॥ १९ ॥

यस्य पादे नगणजगणौ भगणो जगणास्त्रयो रगणश्च भवति, तद्वृत्तं शशिवदना नाम गाथा। एकादशभिर्दशभिश्च यतिः। पञ्चकावलीति केचित्। तत्रोदाहरणम्।

तुरगशताकुलस्य परितः, परमेकतुरङ्गजन्मनः,

प्रमथितभूभृतः प्रतिपथं, मथितस्य भृशं महीभृता।

परिचलतो बलानुजबल,-स्य पुरः सततं धृतश्रिय,-

श्चिरविगतश्रियो जलनिधे,-श्चतदाभवदन्तरं महत्(१)॥

एवमादीनि वृत्तानि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते। विशेषसंज्ञाभावात्तानि शास्त्रकारेण नामनिर्द्देशं कृत्वा नोक्तानि, तानि गाथाशब्देन कथ्यन्ते। इदानीं प्रस्तारादीन् प्रत्ययानुपक्रमते। तत्र गायत्र्यादिप्रस्तारसिद्धार्थमेकाक्षरप्रस्तारपूर्व्वकं द्व्यक्षरप्रस्तारं सूत्रद्वयेनाह।

---

१ माघस्य ३ सर्गस्य ८२ श्लोकः।

(२८८) द्विकौ ग्लौ ॥ २० ॥

उपरिष्टाद् गकारं लिखित्वाऽधस्ताल्लकारं विन्यसेदित्येकाक्षरप्रस्तारः। तस्य द्विकत्वाद् द्वौ ग्लौ द्विकौ स्थापयेत्। द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ। सङ्ख्याया अतिशदन्तायाः कन्निति कन्प्रत्ययः। ततश्च गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्य्यग्रेखां दद्यात्। अधस्ताच्च पूर्व्ववद् गकारलकारौ स्थापयेत्। अत्र किं कर्त्तव्यमित्याह।

(२८९) मिश्रौ च ॥ २१ ॥

अनेन द्वितीयाक्षरप्रस्तारं दर्शयति। चकारः पूर्व्वप्रस्तारसमुच्चयार्थः। द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयस्थानेषु[१] मिश्रौ ग्लौ विन्यसेत्। गकारो गकारेण संश्लिष्टो मिश्र उच्यते[२]। लकारश्च लकारेण। मिश्राविति[३] गकारलकाराभ्यां प्रत्येकमभिसम्बध्यते। द्वन्द्वात् परो यः श्रूयत इति न्यायात्। ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत्, द्वितीयायां लकाराविति। ततो मध्ये लेखामपनयेत्। एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति। तद्यथा, गौ लगौ ग्लौ लाविति। इदानीं द्व्यक्षरप्रस्तारपूर्व्वकमेकैकाक्षरवृद्ध्या त्र्यक्षरादिप्रस्तारं दर्शयितुमाह।

(२९०) पृथग्ला मिश्राः ॥ २२ ॥

द्व्यक्षरप्रस्तारस्य पूर्वन्यायेन द्विकं लेखाविभक्तं स्थाप-

---

१ स्थानद्वितीये इति पुस्तकान्तरपाठः।

२ मिश्रः संश्लिष्ट उच्यते इति ख०, ग०, पुस्तकान्तरपाठश्च।

३ मिश्रावपीति पुस्तकान्तरपाठः।

यित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः। द्वितीयावृत्तौ लकारा मिश्रास्ततो मध्ये लेखामपनयेत्(१)। एवं त्रिकः प्रस्तारः सिध्यति। पृथगिति विजातीयसंसर्गमाह। तेन प्रथमायामावृत्तौ न लकारप्रवेशः। द्वितीयायां न गकारस्य(२)। एवं त्रिकप्रस्तारं द्विः स्थापयित्वा(३) पृथग् ग्ला मिश्रा दातव्याः। इति चतुरक्षरप्रस्तारः। एवं तत्पूर्व्वकः पञ्चाक्षरः प्रस्तारस्तथैव तत्पूर्वकः षड़क्षरो गायत्रीसमवृत्तः प्रस्तारः।

उष्णिगादीनामप्येकैकाक्षरवृद्ध्या(४) अयमेव न्यायः(५) तत्रेदं सूत्रं चाद्यरात्(६) प्रभृति पुनः पुनरावर्त्तनीयं यावदभिमतः प्रस्तारः।

## (१९८) वसवस्त्रिकाः ॥ २३ ॥

एवं पूर्व्वोक्ते त्र्यक्षरप्रस्तरे अष्टौ त्रिका जायन्ते, ते च मकारादयः प्रागादौ कथिता एव। प्रदर्शनार्थञ्चैतत्। तेन षोड़शचतुष्का द्वात्रिंशत्पञ्चका भवन्ति। एवं चतुःषष्टिर्गायत्रीसमवृत्तानि सर्वगुरुलघ्वाद्यन्तानि भवन्ति। द्विगुणोत्तरमुष्णिगादीनामेकैकाक्षराधिक्याद् विस्पष्टार्थमिदं सूत्रं, प्रस्तारादेव सङ्ख्यापरिच्छित्तेः। नष्टवृत्तपरिज्ञानार्थमाह।

---

१ लकारास्ततो मध्याद्रेखामपनयेदिति च०, पुस्तकान्तरपाठश्च।

२ लकारस्याप्रवेशो द्वितीयायां गकारस्येति पुस्तकान्तरपाठः।

३ एवं त्रिकं द्विः स्थापयित्वेति च०, पुस्तकान्तरपाठश्च।

४ एकाक्षरवृद्ध्येति च०, पुस्तकान्तरपाठश्च।

५ अयमेव न्याय इति च०, पुस्तकान्तरपाठश्च।

६ त्र्यक्षरपदात् इति पुस्तकान्तरपाठः।

( १९९ ) लर्द्धे ॥ २४ ॥

यद्येवं विजिज्ञासेत गायत्र्यां समवृत्तं षष्ठं कीदृशमिति। तदा तमेव षट्सङ्ख्याविशेषमर्द्धयेत, तस्मिन्नर्द्धीकृते लघुरेको लभ्यते(१) ते भूमौ विन्यास्याः। इदानीमवशिष्टात् त्रिरिति सङ्ख्याविषयत्वादर्द्धयितुं न शक्यते, तत्र किं प्रतिपत्तव्यमित्याह।

( २०० ) सैके ग् ॥ २५ ॥

अर्द्धे इत्यनुवर्त्तते। विषमसङ्ख्यायामेकमधिकं निक्षिप्य ततोऽर्द्धयेत, तत्रैको गकारो लभ्यते, तं पूर्वलब्धाल्लकारात् परं स्थापयेत(२)। ततो द्विसङ्ख्यावशिष्यते, पुनस्तामर्द्धयेत, ततश्चैकलकारं दद्यात्। ततश्चैकसङ्ख्यावशिष्यते, तत्र तावत् सैके गिति लक्षणमावर्त्तनीयं, यावद्वृत्ताक्षराणि षट् पूर्य्यन्ते। एवं सङ्ख्यान्तरेऽपि योज्यं उद्दिष्टवृत्तस्य सङ्ख्यापरिज्ञानार्थमाह।

( २०१ ) प्रतिलोमगुणं द्विर्लाद्यम् ॥ २६ ॥

यस्य वृत्तस्य सङ्ख्यां जिज्ञासेत तद्भूमौ(३) प्रस्तारयेत। ततस्तस्यान्ते यो लकारः सजातीयापेक्षया तमादौ कृत्वा प्रातिलोम्येन द्विरावर्त्तयेत। तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते। ततश्चैकसङ्ख्याद्यमन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत, ततस्तस्मादपनीय तत्-

१ लभ्यते इति पुस्तकान्तरपाठः।

२ पूर्वलकात्परं स्थापयेदिति क०, ग० च।

३ तद्भूमाविति पुस्तकान्तरपाठः।

पूर्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत। पुनस्तदपि पूर्वस्यैव यावन्ति वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते, तत्र याः सङ्ख्या निष्पद्यन्ते तावतिथं तद् वृत्तमिति। तत्र विशेषमाह।

( १०१ ) ततोऽप्येकं जह्यात्॥ २७॥

पूर्व्वोक्ते कर्म्मणि क्रियमाणे यदि सा सङ्ख्या गकारस्थानमापद्यते तदा तां द्विगुणयित्वा ततः सङ्ख्यासमुदायादेकं त्यजेत्, ततः पूर्व्वोक्तं कर्म्म कुर्य्यात्। ततः परिपूर्णत्वात्तद्वृत्तसङ्ख्या(१) सिद्धाति। प्रस्तारादिना वृत्तसङ्ख्यापरिज्ञानार्थमाह।

( १०२ ) द्विरर्द्धे॥ २८॥

अपनीत इत्यध्याहारः। यदा जिज्ञासेत षड़क्षरे छन्दसि कति वृत्तानि भवन्ति, तदा तां छन्दोऽक्षरसङ्ख्यां भूमौ स्थापयित्वा ततोऽर्द्धमपनयेत। तस्मिन्नपनीते द्वौ लभ्येते। ततस्तां द्विसङ्ख्यां भूमौ पृथक् प्रस्तारयेत। ततः शेषास्त्रयोऽक्षरसङ्ख्यायां भवन्ति, तेषामर्द्धयितुमशक्यत्वात् किं कर्त्तव्यमित्याह।

( १०४ ) रूपे शून्यम्॥ २९॥

विषमसङ्ख्यातो रूपमपनीय तस्मिन्नपनीते शून्यं लभ्यते। तत् पूर्वलब्धाया द्विसङ्ख्याया अधस्तात् स्थापयेत, ततो द्विसङ्ख्यावशिष्यते, ततोऽर्द्धेऽपनीते पुनर्द्विसङ्ख्या लभ्यते, तां शून्याधस्तात् स्थापयेत, ततो रूपे शून्यं लभ्यते, तद् द्विसङ्ख्याया अधस्तात् स्थापयेत्। ततः किं कर्त्तव्यमित्याह।

---

१ परिपूर्णा वृत्तसङ्ख्येति पुस्तकान्तरपाठः।

## (२०५) द्विः शून्ये ॥ ३० ॥

शून्यस्थाने द्विरावृत्तिं कुर्य्यात्। तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावात् एकसङ्ख्या लभ्यते। तां शून्ये स्थापयित्वा द्विगुणयेत। ततो द्वौ भवतः। तस्योपरिष्टादर्द्धस्थानं द्विसङ्ख्याङ्क(१) तदपनीय तस्य स्थाने तं द्विसङ्ख्याङ्कं(२) स्थापयेत। अनन्तरमिदं कर्त्तव्यमित्याह।

## (२०६) तावदर्द्धे तद्गुणितम् ॥ ३१ ॥

यदर्द्धस्थाने(३) स्थितं सङ्ख्याजातं तत्तावद् गुणितं(४) कुर्य्यात्। एतदुक्तं भवति, स्वसङ्ख्ययैव गुणयितव्यमिति। ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति। तेषामुपरिष्टाच्छून्यस्थानं तत्र तानारोपयेत। अनन्तरं द्विः शून्य इति द्विगुणिता अष्टौ भवन्ति, तानप्यर्द्धस्थाने निधाय तावद्गुणान् कुर्य्यात्। ततोऽष्टावष्टाभिर्गुणिताश्चतुःषष्टिर्भवन्ति गायत्रीसमवृत्तानि। अनेनैव न्यायेनाष्टाविंशत्यधिकशतमुष्णिहः। षट्पञ्चाशदधिके द्वे शते(५) अनुष्टुभः। द्वादशोत्तराणि पञ्चशतानि वृहत्याः। चतुर्विंशत्यधिकं सहस्रं पङ्क्तेः। अष्टचत्वारिंशदधिके द्वे सहस्रे त्रिष्टुभः। षण्णवत्यधि-

---

१ द्विसङ्ख्याकमिति पुस्तकान्तरपाठः।

२ तां द्विसङ्ख्यामिति पुस्तकान्तरपाठः।

३ यतदर्द्धस्थाने इति पुस्तकान्तरपाठः।

४ तत्तावद्गुणमिति पुस्तकान्तरपाठः।

५ षट्पञ्चाशदधिकशतद्वयमिति पुस्तकान्तरपाठः।

कानि चत्वारि सहस्राणि जगत्याः । एवमतिच्छन्दसां कृतीनाञ्च द्रष्टव्यम् ।

(१०७) द्विर्द्व्यूनन्तदन्तानाम् ॥ ३२ ॥

गायत्र्यादिवृत्तसङ्ख्याजातं द्विगुणीकृत्य द्वाभ्यामूनं कुर्य्यात् । तत्तदन्तानां परिमाणं भवति, यस्य छन्दसः सङ्ख्या द्विगुणिता तत्पर्य्यन्तानां पूर्वेषामेकाक्षरप्रभृतीनां सङ्ख्या भवतीत्यर्थः ।

(१०८) परेण पूर्णम् ॥ १६ ॥

तदेतत्[१]छन्दोवृत्तसङ्ख्याजातं द्विगुणितं पूर्णमेव[२] स्थापयितव्यं न न्यूनं । परे छन्दसि जिज्ञासिते तत् सङ्ख्याजातं द्विगुणितं परस्य छन्दसो वृत्तानां सङ्ख्या भवति । तद्यथा । चतुःषष्टिर्गायत्री समवृत्तानां सङ्ख्या[३] द्विगुणिता सती परस्योष्णिहः समवृत्तसङ्ख्याष्टाविंशं शतं भवति ॥

(१०९) परे पूर्णमिति ॥ १७ ॥

अतोऽनेकद्वित्रिलघुक्रियासिद्ध्यर्थं यावदभिमतं प्रथमप्रस्तारवत् मेरुप्रस्तारं दर्शयति, उपरिष्टादेकं चतुरस्रकोष्ठं[४] लिखित्वा तस्याधस्तादुभयतोऽर्द्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत,

---

१ तदेवेति पुस्तकान्तरपाठः ।

२ पूर्वमेवेति पुस्तकान्तरपाठः ।

३ समवृत्तसङ्ख्येति पुस्तकान्तरपाठः ।

४ कोष्ठकमिति क०, पुस्तकान्तरपाठश्च ।

तस्याप्यधस्तात्त्रयं(१) तस्याप्यधस्ताच्चतुष्टयं यावदाभिमतं स्यानमिति प्रथममेरुप्रस्तारः। तस्य प्रथमे कोष्ठे(२) एकसङ्ख्यां व्यवस्थाप्य लक्षणमिदं प्रवर्त्तयेत्। तत्र परे कोष्ठे यद्वृत्तसङ्ख्याजातं तत् पूर्व्वकोष्ठयोः पूर्णं निवेशयेत। तत्रोभयोः कोष्ठयोरेकैकमङ्कं दद्यात्। ततस्तृतीयायां पङ्क्तौ पर्य्यन्तकोष्ठयोः परकोष्ठगतमेकैकमङ्कं दद्यात्। मध्ये कोष्ठे तु(३) परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं निवेशयेदिति पूर्णशब्दार्थः। चतुर्थ्यां पङ्क्तावपि पर्य्यन्तकोष्ठयोरेकैकमेव स्थापयेत। मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं त्रिसङ्ख्यारूपं स्थापयेत्। उत्तरत्राप्ययमेव न्यासः।

तत्र(४) द्विकोष्ठायां पङ्क्तौ एकाक्षरस्य विन्यासः। तत्रैकगुर्वेकलघुवृत्तं भवति। तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः। तत्रैकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघ्विति कोष्ठक्रमेण वृत्तानि भवन्ति। चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः। तत्रैकं सर्वगुरु त्रीण्येकलघूनि त्रीणि द्विलघूनि(५) एकं सर्वलघु। तथा पञ्चमादिपङ्क्तावपि सर्वगुर्व्वादि सर्वलघ्वन्तमेकद्व्यादिलघु द्रष्टव्यमिति। षष्ठप्रत्ययोऽप्ययमर्थपरिच्छित्तिरित्येके। सोऽत्यल्प-

---

१ तस्याधस्तात्त्रयमिति पुस्तकान्तरपाठः।

२ प्रथमकोष्ठके इति ख०, ग० च।

३ मध्यमकोष्ठे तु इति ख०, ग०, पुस्तकान्तरपाठश्च।

४ तत्रापीति पुस्तकान्तरपाठः।

५ त्रीणि त्रीणि एकद्विलघूनि इति पुस्तकान्तर पाठः।

त्वात् पुरुषेच्छानुविधायित्वेनानियतत्वाच्च नोक्तः। एवं प्रत्यय-समासः[1] समाप्तः॥

पिङ्गलाचार्य्यरचिते छन्दःशास्त्रे हलायुधः।
मृतसञ्जीवनीं नाम वृत्तिं निर्म्मितवानिमाम्॥

इति श्रीभट्टहलायुधकृतायां छन्दोवृत्तौ मृतसञ्जीवनी-नाम्न्यामष्टमोऽध्यायः समाप्तः॥

---

म य द्वादश। धीः पञ्चदश। छन्दषोडश। पादः परी-क्षिक् प्रस्तारपङ्क्तिविंशतिर्विंशतिरेकविंशतिः। देवतादितोऽष्टौ। चतुःशतं षष्ठो विंशतिर्विंशतिः। युगपरात्मिका त्रयोदश। वृत्तं गावादो विंशतिर्विंशतिः। यवमतो त्रीणि। यतिर्विंशतिः। वातोर्म्मी मष्टादश। प्रहर्षिणी विंशतिः। शार्दूल-विक्रीडितं पञ्चदश। अत्रानुक्तं सप्तदश। इतित्यष्टादशच्छन्दः समाप्तम्॥

---

१ प्रत्ययविभाग इति पुस्तकान्तरपाठः।

The Maitri Upanishad with a commentary and a translation. By E. B. Cowell, M, A., 3 Fasciculi, ... ... ... 1 14
The Gopála Tápaní. Edited by Paṇdita Harachandra Vidyábhúshana 0 10
The Grihya Sutra of A'svaláyana, with the commentary of Gárgya-náráyaṇa. Edited by A'nandachandra Vedántavágisa 4 Fasciculi, 2 8
The Nrisinha Tápani with the commentary of Sankara A'chárya, edited by Paṇdita Rámmaya Tarkálankára. 3 Fasciculi, .. 1 14
Gopatha Brahmana, Edited by Babu Rájendralála Mitra. 2 fasc.... 1 10
The Taittiriya Prátisákhya. Edited by Bábu Rájendralála Mitra. 3 fasc., ... ... .. ... ... 1 14
The Taittiriya A'ranyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. 11 Fasciculi, ... ... ... 6 14
The Látyáyana Sutra. Edited by Paṇdita A'nandachandra Vedántavágiśa. 9 Fasciculi, .. ... ... .. 5 10
Chaturvarga Chintámani by Hemádri. Edited by Paṇdit Bharata Chandra Siromani, 11 fasc., ... ... ... 6 14
The Táṇdya Mahábráhmaṇa with the Commentary of Sáyaṇácharya. Edited by A'nandachandra Vedántavágísa, 19 Fasciculi, .. 11 14
Chhandah Sútra of Pingala Achárya. Edited by Viśvanátha S'ástrí 3 fasc. ... .. .. .. .. 1 14

SANSKRIT WORKS IN PROGRESS.

*Old Series Nos. 1 to 230, demi 8vo.*

The Lalita-Vistara, or Memoirs of the Life and Doctrines of S'ákya Sinha. Edited by Babu Rájendralála Mitra. Published 5 Fasciculi, ... ... ... ... .. 3 2
The Taittiríya Bráhmaṇa of the Black Yajur Veda, with the commetary of Sáyaṇa. Edited by Bábu Rájendralála Mitra. Published 26 Fasciculi, .. .. ... .. 16
Taittiriya, Sanhitá. Edited by Dr. E. Röer, E. B. Cowell, M. A. and Mahesachandra Nyáyaratna. Published 28 Fasciculi, ... 16 14

*New Series, Nos. 1 to 291, demi 8vo.*

The Mímáñsá Darśana, with the Commentary of S'avara Svámí. Edited by Paṇdita Maheśa-chandra Nyayaratna. Published, 11 Fasciculi, ... .. .. .. ... 6 14
The Agni Puráṇa. Edited by Bábu Rájendra lála Mitra, .. 5 Fasciculi, ... .. ... .. ... 2 8
Gobhiliya Grihya Sutra with a commentary by the Editor, Pandit Chandrakánta Tarkálankár. 5 fasc., .. ... ... 2 8
Sáma Veda Sañhita with the commentary of Sayaṇa A'chárya. Edited by Paṇdit Satyavrata Sámasramí, Part I. 10 fasc., Part II. Fas. I. 6 4
A'tharvanopanishads with the commentary of Náráyana, Edited by Puṇdita Rámamaya Tárkáratna, Nos. 249 265 276 & 282. 305 2 8
Prithiraj Rasu, by Chand Bardai, Part I. fasc. I Pt. II. fasci. I. ... 0 10

*English Translations complete, demi 8vo.*

An English Translation of the Brihad A'raṇyaka Upanishad, and Commentary. By Dr. E. Röer, 3 Fasciculi, .. ... 1 14
An English Translation of Chhándogya Upanished, by Babu Rájendralála Mitra. 2 Fasciculi, ... ... ... 1 4
An English Translation of the Taittiríya, Aittaréya, Svetáśvatara. Kéna, Iśa, Katha, Muṇdka and Máṇdukya Upanishads, by Dr. E. Röer. 2 Fasciculi, .. ... .. .. 1 4
The Súrya-Sidhánta, translated by Paṇdita Bápú Deva Sástri. 1 Fasciculus, ... ... ... ... ... 0 10
The Siddhánta Siromani, translated by the late Lancelot Wilkinson, Esq. C. S., and revised by Paṇdita Bápû Deva Sástrí. 2 Fasciculi, ... ... ... ... 1 4
A Translation of the Sánkhya Aphorisms of Kapila, by Dr. Ballan-

*English Translations in progress, demi 8vo.*

| | | |
|---|---|---|
| Sáhitya Darpaṇa or Mirror of Composition, a treatise on Literary criticism by Visvanátha Kavirája. Translated into English by Babu Pramadádása Mitra. 3 Fasciculi, — — | 1 | 14 |
| The Brahma Sutra with the commentary of Sankar Achárya. Translated into English by the Rev. K. M. Banerjea, No. 214, — | 1 | 0 |
| Aini Akbari 6 fasc., — — — | 10 | 8 |

B. MISCELLANEOUS.

| | | |
|---|---|---|
| One complete set of the Journal of the Asiatic Society of Bengal, — | 750 | 0 |
| Journal of the Asiatic Society, from Vol. XII. for 1842, to Vol. XXXVI. for the 1867, except Vols. XXIII, XXIV. and XXIX. prices as per title page. | | |
| Asiatic Researches, from Vols. VI to XII. and Vols. XVII. to XX., each at., — — — — — | 10 | |
| Ditto ditto Index, — — — — | 5 | 0 |
| Catalogue of the Books and Maps in the Library of the Asiatic Society, By Bábu Rájendralála Mitra, 1856, — — | 3 | 0 |
| ——— of the Sanskrit Books and MSS. of the Asiatic Society, — | 1 | 0 |
| ——— of Persian, Arabic, and Urdu, ditto, — — | 1 | 0 |
| ——— of the Fossil Remains of Vertebrata from the Sewalik Hills, the Nerbudda, Perim Island, &c. in the Meseum of the Asiatic Society of Bengal. By H. Falconer, Esq., M.D., F. R S. and H.S., | 2 | 0 |
| ——— of the Recent Shells in the Museum of the Asiatic Society, by W. Theobald, Esq., Jnr., — — — | 3 | 0 |
| ——— of the Reptiles in the Asiatic Society's Museum by W. Theobald, Esq., Jr., — — — — | 3 | 0 |
| Catalogue of Mammália, — — — — | 3 | 0 |
| Harivansa, 563 pages, royal 4to., — — — | 3 | 0 |
| Mahábhárata, Vols. 3rd and 4th, royal, 4to., and Index, — | 40 | 0 |
| Rájataranginí, 440 pages, 4to., — — — | 4 | 0 |
| Csoma's Tibetan Grammar, — — — | 8 | 0 |
| ——— ——— Dictionary, — — — | 10 | 0 |
| Vedánta Sára, translated by Dr. E. Röer., — — | 0 | 8 |
| Purána Sangraha, edited by the Rev. K. M. Banerjea, No. I., — | 1 | 0 |

1—PRIVATE PUBLICATIONS.

| | | |
|---|---|---|
| Wise's Hindu System of Medicine, — — — | 9 | 0 |
| The pilgrimage of Fa Hian, — — — | 5 | 0 |
| Lassen's Bactrian Coins, by Dr. Edward Röer, — — | 5 | 0 |
| Meng Tseu, in Latin, by Stanislaus Julien. Two parts in one vol., | 6 | 0 |
| Aborigines of India, by B. H. Hodgson, — — | 3 | 0 |
| History of the Afghans, Pt. I., by Dorn, — — | 5 | 0 |
| Examination and Analysis of Mackenzie Manuscripts, by the Rev. W. Taylor, — — — — | 2 | |
| Low's Siamese Grammar, — — — — | 2 | |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, F.R.S., | 1 | 8 |
| Dictionarium Anamittico-Latinum, by A. J. L. Tabard, — | 14 | 0 |
| Blank Vocabulary for Ethnographical purposes, — — | 1 | 0 |
| Collection of Oriental Proverbs, by Thomas Roebuck, — — | 2 | 0 |
| Matapariksha, — — — — — | 0 | 8 |
| Travels of Macarius, Pt. I., by F. C. Balfour, — — | 4 | 0 |
| Contributions towards an Index to Indian Bibliography, F. Hall, — | 2 | 0 |
| Outlines of Indian Philology, by J. Beames, — — | 2 | 8 |
| Translations from the Tárikh Fíruzshahi, — — — | 1 | 8 |

*N. B.*—For Arabic, Persian and Urdu works vide the covers of the